A'tma Vidya' Series No. I.

# S'RÎ RÂMA GÎTÂ.



SAMSKRITA TEXT.

# S'RÎ RÂMA GÎTÂ.

*(Forming part of 'Tattvasârâyana,' the Occult Philosophy taught by the great Sage S'rî Vasishtha.)*

## THE SAMSKRITA TEXT,

### WITH AN APPENDIX

CONTAINING THE TABLE OF CONTENTS AND THE TEACHINGS IN BRIEF OF THE THREE KÂNDAS OF TATTVASÂRÂYANA.

EDITED BY

G. KRISHNA S'ÂSTRÎ,

*Of the Adyar Library.*

श्रीवसिष्ठमहर्षिप्रोक्त तत्वसारायणान्तर्गताश्रीमद्रामगीता

तत्वसारायणकाण्डत्रयाणां विषयसूचिकया

तत्तत्काण्डसारसङ्ग्रहेण च समेता.

MADRAS:

PUBLISHED BY THE EDITOR

FOR THE ANUBHAVA'DVAITA PUBLICATION FUND.

1902.

To my beloved father

ŚRÎ MAHÂGAṆAPATI S'ARMA

A TOKEN OF FILIAL REVERENCE.

# PREFACE.

ALTHOUGH "history, in the ordinary sense of the word, is almost unknown in Indian literature," as Prof. Max Müller has expressed it in his Hibbert lectures (page 131), yet the Hindus believe that Itihâsas and Purâṇas are their most precious records. They at least appear to be of the greatest value and the memorials of spiritual evolution, and the student of Philosophy and Occultism has much to learn from them. Each Itihâsa and each Purâna contains one or more Gîtâs, or divine Odes, in which are condensed the teachings, in one form or other, of the Science of the Self. Just as the well-known Bhagavad Gîtâ forms part of the Mahâbhârata, so does Râma Gîtâ form part of another Itihâsa called Tattvasârâyana, to which ought to be prefixed the words "Gurujnâna Vâsishtha" to make its name complete. There are many works in Samskrita literature which have not come to the notice of the public and among them the Tattvasârâyana. Indeed, until very recently, it was beyond the reach even of most Samskritists as it existed only in the form of rare MSS. in private and public libraries.

At the "Adisarasvatî Nilaya" Press, Madras, was printed, in 1882, the Jnâna (the first) Kânda of this Itihâsa together with that most important work called "Adhikaraṇa Kanchuka," a very valuable commentary on Dakshinamûrti's Brahmasûtra-vritti, forming part of its second pâda, by the great Appayadîkshita. The name of the publisher of this work was Appayadîkshitachârya, a worthy descendant of the author of "Adihikarana Kanchuka." He was the modern exponent and leader of the Anubhavâdvaita system. He died in July last, leaving behind him very many voluminous works in Samskrita and Tamil, bear-

ing on this system. He also left a short autobiography giving the principal events of his life. He was not generally known to the public, for he was a literary recluse all his life, and actually led the life of a Brâhmana of the olden time. He had consequently no public recognition and government honors like his cousin Mahâmahopâdhyâya Tyâgarâja Makhi who is popularly known as Mannârgudi Raju S'âstrî. Even the majority of those that knew Appayadîkshitâchârya disliked him very much for his bold views, which often openly contradicted the views of S'ankarâcharya concerning the ancient teachings. If he had any real merit his works will form his monument and frame his epitaph. Mantri Lakshmînârâyaṇa S'âstrî edited "Yajnavarâha Gîtâ" (chapters 11, 12 and 13 of the Jnâna Kânda of Tattvasârâyaṇa) with Telugu meaning, and his book was printed about the year 1887, in Madras. The (second) Upâsanâ, and the (third) Karma, Kândas were printed in 1894 and 1897 respectively at the "Bhâratîlîlâsadana" Press of Karvetnagar Estate by order of the Raja. Thus the whole of Tattvâsârâyaṇa is now printed in Telugu characters.

In the "Catalogus Catalogorum" of Aufrecht we see an entry on page 156 (line 15), thus: "Gurujnâna Vâsishtha, Vedanta, Oppert 7053;" and Dr. Oppert in his "Lists of Sanskrit MSS. in private Libraries of Southern India," vol. I, page 522, says that Mandâdi Kondayya Pantulu, of Kattapêta, Vijayanagaram, has a copy of it in his possession. The Adyar Library, also, has a copy of it in the Grantha characters, but portions of this cadjan MS. are somewhat damaged.

This manuscript is considered of the utmost importance by a large portion of the Indian public. Quite recently the management of the Adyar Library issued a short list of MSS. not yet published and requested the Pandits who received them to select such as they considered of greatest value and entitled to be printed first in the new Samskrita journal under consideration by

the Trustees. In nine out of ten cases, the Tattvasârâyaṇa was selected as that which should be first issued.

Of the authorship of the work in question, nothing is known definitely, nor the date of its compilation. Doubtless the most eminent Orientalists will some day decide these important points. All the information that we have at present is in the tradition held by a few followers of the Anubhavâdvaita system now living in Southern India. They believe that this "Gurujnâna Vasishtha" is the most ancient Vedântic Itihâsa, and that all the later systems of Vedânta are its modifications. The authorship is ascribed to Vasishtha, who is said to have taught it to his disciple, Râma. It is written in the form of a dialogue between Dakshshinâmûrti, the divine teacher, and Brahmâ, the Creator.

The most important commentaries on the Anubhavâdvaita system, which is based on the Tattvasârâyaṇâ and the Râma Gîtâ, the gem of the work, are, as we have said, those of Appayadîkshîtâchârya. He has left about one hundred and thirty works on the Anubhavâdvaita system. The publisher was personally acquainted with him; to him were given copies of nearly all his writings; he holds the copyright and has since published a portion of them. He presented copies of them to the Mysore Government Oriental Library, but, by some mischance, the works are all ascribed in its Catalogue to Appaya S'ivâchârya, and not to the real author. The mistake will doubtless be rectified as the publisher has called their attention to the error.

From these numerous works, and the teachings of the few pupils whom Appayadîkshîtâchârya left behind him, as far as is now known, must be gathered all that can be known of these ancient teachings.

The Samskrita printing in this Presidency town is still in its infancy and consequently many minor imperfections can be noticed in the printing of the text and its appendix. The important mistakes have been pointed out in the errata. The spacing has

not been properly done and two or three spelling mistakes have been repeated throughout the text. Strictly speaking they should not be called mistakes but only provincialisms. In other respects the text has been carefully edited and well collated.

---

## ॥ श्रीमद्रामगीतान्तर्गतविषयानुक्रमणिका ॥

# ERRATA.

## ॥ शुद्धाशुद्ध पत्रिका ॥

| पुटे· | पङ्क्तौ· | अशुद्धम्· | शुद्धम्· |
|---|---|---|---|
| 1 | 1 | श्रीरामजयम् | श्रीरामोविजयते |
| 1 | 3 | तत्व | तत्त्व |
| 1 | 6 | ब्रह्मन्नत्युदुतामहं | ब्रह्मन्नत्यद्भुतामहम् |
| 2 | 5 | सुभक्तभिः | सुभक्तिभिः |
| 2 | 7 | आशृतः | आश्रितः |
| 2 | 11 | तपसा | तपसां |
| 4 | 13 | सामान्या त्वत्सेवा | सामान्यात् त्वत्सेवा |
| 6 | 9 | तदवमत्स्वरूपं | तदेव मत्स्वरूपं |
| 6 | 22 | कास्युः | कास्स्युः |
| 8 | 4 | कौषतिकी | कौषितकी |
| 8 | 16 | त्रीपुरातपन | त्रिपुरातपन |
| 9 | 10 | सिध्योद्विदेह | सिध्येद्विदेह |
| ,, | 11 | शतंपर | शतपर |
| 9 | 18 | विदेहास्युः | विदेहास्स्युः |
| 10 | 11 | शेवधिष्ठे | शेवधिष्टेऽ |
| 11 | 7 | हीयत | हीयते |
| 11 | 11 | श्वीमन् | श्रीमन् |
| 12 | 21 | ततस्तंनिर्गुणं | ततस्तन्निर्गुणं |
| 13 | 15 | ब्रह्मलो के | ब्रह्मलोके |
| 13 | 16 | द्वितीयात्विह | द्वितीयात्त्विह |
| 14 | 3 | जागतजैव कौ | जागतजैवकौ |
| 15 | 9 | प्रकृतिस्त्वेकौ | प्रकृतस्त्वेकौ |

| पुटे· | पङ्क्तौ· | अशुद्धम्· | शुद्धम्· |
|---|---|---|---|
| 16 | 5 | शुकप्रादेश | शूकप्रादेश |
| ,, | 9 | मिध्योति | मिथ्येति |
| 17 | 11 | सत्यस्सुख | सत्यसुख |
| 18 | 3 | हीय्येत | हीयेत |
| 19 | 17 | चित्वं | चित्त्वं |
| 20 | 13 | गुह्याङ्घ्रि | गुह्याङ्घ्रि |
| 21 | 9 | कामक्रोघादयो | कामक्रोधादयो |
| 22 | 15 | प्रसिद्धार्थँ | प्रसिद्धार्थं |
| 23 | 4 | रहस्यर्थो | रहस्यार्थो |
| ,, | 17 | स्वयेमवात्र | स्वयमेवात्र |
| 24 | 7 | दृष्टृ | द्रष्टृ |
| 24 | 17 | अन्युदुणुमात्र | अन्यदणुमात्र |
| 25 | 14 | अथाण्यता | अथाप्यता |
| ,, | 22 | यतस्सावुः | यतस्साधुः |
| 26 | 1 | हेतुस्यात् | हेतुस्स्यात् |
| 26 | 8 | तथाण्यता | तथाप्यता |
| 26 | 12 | विरुद्यते | विरुध्यते |
| 27 | 3 | नित्यबोथामृत | नित्यबोधामृत |
| ,, | 16 | रघुनायक | रघुनायक |
| 28 | 9 | इवा | इव |
| 30 | 10 | वासनौघेन | वासनौघेन |
| 31 | 11 | माकारोतु | माकरोतु |
| ,, | 18 | समाधानजण्याभ्यां | समाधानजप्याभ्यां |
| 32 | 12 | विनश्वतः | विनश्यतः |
| 35 | 10 | भूमिषुयोगतः | भूमिसुयोगतः |

| पुटे॰ | पङ्क्तौ॰ | अशुद्धम्॰ | शुद्धम्॰ |
|---|---|---|---|
| 44 | 19 | स्नानादीति | स्नानादीति |
| 54 | 5 | राघवः क्वचित् | राघवक्वचित् |
| 55 | 8 | पृष्टव्यान् | प्रष्टव्यान् |
| 59 | 20 | दर्शयिष्यामि | दर्शयिष्यसि |
| 60 | 12 | संप्रत्यवाप्स्यति | संप्रत्यवाप्स्यसि |
| 68 | 12 | ब्रह्मणस्स्वगताभिदां | ब्रह्मणस्स्वगतांभिदां |
| 69 | 8 | श्रुणु | शृणु |
| 74 | 12 | वर्णनीयाथ | वर्णनीयोथ |
| 74 | 16 | प्रश्रंयावनतो | प्रश्रयावनतो |
| 75 | 3 | विद्याधिकारिणी | विद्याधिकारिणि |
| ,, | 7 | एके मे वाऽ द्वितीयं | एकमेवाद्वितियं |
| 76 | 13 | मीमांसायामिहेदृशी | मीमांसायामिहेदृशि |
| 78 | 11 | अविनाशी | अविनाशि |
| 81 | 14 | तटिद्वत् | तडिद्वत् |
| 82 | 9 | अंशाशित्व | अंशांशित्व |
| 83 | 15 | लोष्ठाश्म | लोष्टाश्म |
| 84 | 2 | सह्यष्यति | नह्यष्यति |
| 90 | 18 | प्रतिष्टंभोपराजयः | प्रतिष्टंभोऽपराजयः |
| 96 | 14 | अवश्यभावि | अवश्यंभावि |
| 101 | 8 | गीता श्रुता | गीताश्श्रुता |
| ,, | 11 | स्वस्थो पिपासोऽस्मि | स्वस्थोऽपिपासोऽस्मि |

## IN THE APPENDIX.

॥ उपाहितभागे ॥

| | | | |
|---|---|---|---|
| xxix. | 12 | कर्मणा कर्मतामेत्य | कर्मणाऽकर्मतामेत्य |

॥ श्रीरामजयम् ॥

श्रीरस्तु

---

## तत्वसारायण उपासनाकाण्डस्य द्वितीयपादे

## श्रीरामगीताप्रारम्भः

॥ श्रीगुरुमूर्तिः ॥

देवीं श्रीरामगीतान्तां ब्रह्मन्नत्यद्भुतामहम् ।
अत्युत्सुकोस्मि ते वक्तुं सावधानमनाश्रुणु ॥ १.
अयोध्यानगरी रम्या सर्वलक्षणसंयुता ।
जितब्रह्मपुरी साक्षाद्वैकुण्ठइव विश्रुता ॥ २.
तत्रोद्यानोत्तमं भाति सर्वर्तुपरिशोभितं ।
सर्ववृक्षसमाकीर्णं सर्वपक्षिनिषेवितम् ॥ ३.
वापीकूपतटाकैश्च मञ्जुळैरुपशोभितं ।
सर्वसन्तापशमनं सर्वानन्दप्रदायकम् ॥ ४.
तन्मध्ये कोटिसूर्याभो भासते रत्नमण्टपः ।
अनेककाञ्चनस्तंभैरमरैर्विधृतः परैः ॥ ५.
तल संप्रोतवज्रैश्च श्रुतिवाक्यैस्सुशोभितः ।
स्तंभाग्रशङ्कुषु प्रोतमुक्ताहारैर्महाक्षरैः ॥ ६.
वैडूर्यकुट्टिमैस्सर्वमहर्षिनिवहैस्तथा ।
तोरणैः कदलीवृक्षैः पुराणैस्स्मृतिभिस्तथा ॥ ७.
विशालदर्पणैर्विद्याविशेषैस्समलङ्कृतः ।
दुकूलादिपटश्रेष्ठैर्महामन्त्रैरुपावृतः ॥ ८.

विविधालेख्यकैश्शान्तिदान्त्यादिसुगुणैर्वृतः ।
मालती मल्लिकाशोकैर्दर्शनश्रवणादिभिः ॥ ९.

चन्दनागरुकर्पूरसाङ्ख्ययोगसमाधिभिः ।
फलपुष्पविशेषैश्च चिदानन्दादिवृत्तिभिः ॥ १०.

ताम्बूलवीटिकादिव्यलवङ्गाद्यैस्सुभक्तिभिः ।
सौवर्णानेकपात्रैश्च वृतो निष्कामकर्मभिः ॥ ११.

धूपदीपविशेषैश्च स्वधास्वाहाभिराशृतः ।
विविधैस्स्वर्णपीठैश्च यन्त्रश्रेष्ठैस्सुमण्डितः ॥ १२.

वादित्रैर्विविधैश्चापि योगैरष्टाङ्गसंयुतैः ।
षड्रसोपेतभक्ष्यैश्च स्वात्मानन्दामृतोत्करैः ॥ १३.

अनेकजन्मतपसा दर्शनीयश्च राशिभिः ।
मनसालोचितुमपि ह्यशक्यो विश्वकर्मणा ॥ १४.

चतुर्दशसु लोकेषु कुत्रचिन्नच यत्समः ।
भूतभव्यभविष्यत्सु न कालेषु च यत्समः ॥ १५.

तन्मध्ये वज्रवैडूर्यमुक्ताहारैरलङ्कृतं ।
आभाति काञ्चनमयं बृहत्सिंहासनोत्तमम् ॥ १६.

नित्यं विराजते तत्र श्रीरामो निवसन् भृशं ।
सीता भरतशत्रुघ्नैः लक्ष्मणेन च सेवितः ॥ १७.

ब्रह्मणा च सरस्वत्या सनकाद्यैर्मुनीश्वरैः ।
वसिष्ठाद्यैश्शुकाद्यैश्च स्तूयमानो महर्षिभिः ॥ १८.

वेदपाठसमासक्ता न्क्वचिच्छिष्यान्सुशिक्षयन् ।
तर्कव्याकरणादीनि क्वचिदङ्गानि शिक्षयन् ॥ १९.

वेदान्तोक्तरहस्यार्थान् क्वचिन्मुख्याधिकारिणां ।
बोधयन्नात्मनाक्रीडन्क्वचिदात्मसुखे रतः* ॥ २०.
वज्रवैडूर्यगोमेदपुष्यरागादिमण्डितं ।
किरीटं शिरसा नित्यं भासयन् काञ्चनात्मकम् ॥ २१.
चन्द्रसूर्यप्रतीकाशे श्रोत्राभ्यामपि कुण्डले ।
उन्नतेनांसयुग्मेन सौवर्णाङ्गदयुग्मकम् ॥ २२.
अङ्गुलीयकसन्दोहं स्वकीयाङ्गुलिपल्लवैः ।
मुक्ताहारानतिस्थूलान्कण्ठोरोभ्यां मनोहरान् ॥ २३.
पीताम्बरं च मृदुलं कटिजानूरुणा स्वयं ।
नूपुरद्वयमम्लानपादपद्मद्वयेन च ॥ २४.
शङ्खचक्रगदापाणिः पद्मनाभो जगत्पतिः ।
श्रीरामो भगवांस्तत्राप्यास निर्वेदमात्मनि ॥ २५.
लौकिकैर्वैदिकैश्चापि व्यापारैश्श्रमहेतुभिः ।
विक्षिप्तचित्तो नैकान्त्यादैकान्त्ये कृतवान्मतिम् ॥ २६.
इङ्गितज्ञास्ततस्सर्वे ब्रह्माद्यालक्ष्मणादयः ।
हनूमन्तं विना तूष्णीं द्वारपालं विनिर्ययुः ॥ २७.
रावणारिस्ततस्तत्र बद्धपद्मासनस्स्वयं ।
इन्द्रियाणि समस्तानि विषयेभ्यउपाहरन् ॥ २८.
सर्ववेदान्तसंप्रोक्ते निर्विकल्पे निरञ्जने ।
निर्गुणे सच्चिदानन्दघने ब्रह्मणि निश्चले ॥ २९.
प्रतिष्ठाप्य मनस्तूर्णमखण्डानन्दसागरे ।
निर्विकल्पसमाधौ च ममज्ज भृशमादरात् ॥ ३०.

---

* रमन् इति पाठान्तरम्.

यत्र पश्यति नान्यच्च न शृणोति च किञ्चन ।
न विजानाति किञ्चिच्च भूमानन्दस्वरूपवान् ॥ ३१.

तत्सुखानुभवात्सर्वकरणोल्लाससंयुतः ।
जगद्रक्षणधीबीजैः प्रेरितो बहिराययौ ॥ ३२.

ततस्समाधिविरतं रामं ज्ञात्वा महामतिः ।
प्राञ्जलिः पुरतो गत्वा हनूमान्पवनात्मजः ॥ ३३.

प्रणम्य दण्डवद्भूमौ विनयावनताननः ।
अर्घ्यपाद्यादिभिस्सर्वैः परिपूज्य यथा विधि ॥ ३४.

भक्त्या शुश्रूषया रामं तत्वार्थकथनोन्मुखं ।
तोषयित्वा मृदुश्लक्ष्णमिदं पप्रच्छ सादरम् ॥ ३५.

राम त्वं परमात्मासि सच्चिदानन्दविग्रहः ।
त्वमेव सर्वभूतानां सृष्टिस्थित्यन्तकारणम् ॥ ३६.

इति जानामि सामान्या त्वत्सेवा पुण्यगौरवात् ।
विशेषतः* परिज्ञानाभावादस्मीह दुःखवान् ॥ ३७.

विचार्यमाणे संसारे दुःखमेव समन्ततः ।
तथापि सुखबुद्ध्याहं बळिशे मत्स्यवद्गतः ॥ ३८.

अहो दुःखोदधेः पारं नावगच्छामि चिन्तयन् ।
देहो रोगालयो नित्यषड्भावा यस्य निश्चिताः ॥ ३९.

अनेन कृतकृत्यत्वं कथं वज्रसमेन वा ।
देहेन सर्वथाप्यस्माच्छ्रेयोन्यत्रेति मे मतिः ॥ ४०.

तवैतत्सगुणं रूपं माययाविष्कृतं त्वया ।
सर्वज्ञेन दयासिन्धो सर्वशक्तिमता स्वयम् ॥ ४१.

---

* विशेषेण इति पाठान्तरम्.

सर्वलोकाहितार्थाय चित्तशुद्ध्यै विकामिनां ।
हृत्पद्मकुहरे नित्यं ध्येयं सुनिपुणैरपि ॥ ४२.
अपरोक्षीकृतं ह्येतन्मत्पूर्वसुकृतैः परैः ।
अन्यत्तु निर्गुणं रूपमदृश्यं चर्मचक्षुषा ॥ ४३.
अशरीरं महाकाशसदृशं ज्योतिरुत्तमं ।
प्रसिद्धं नित्यशुद्धं च नित्यबुद्धं च शाश्वतम् ॥ ४४.
नित्यमुक्तं च सर्वेषां परमात्माख्यमव्ययं ।
अहं वेदितुमिच्छामि कृपा यद्यास्ति ते मयि ॥ ४५.
अहंचात्राधिकारीचेन्नायासस्ते च वाग्व्यये ।
प्रार्थयाम्यात्मलाभार्थं वक्तव्यमिति तद्विभो ॥ ४६.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीयपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
अयोध्यामण्टपादिवर्णनं नाम
॥ प्रथमोऽध्यायः ॥

---

॥ श्रीरामः ॥

साधु साधु महाप्राज्ञ मारुते जगतां हितं ।
संसारमोक्षवर्त्मेदं भवता पृष्टमद्भुतम् ॥ १.
मत्तो विदितवेदार्थः प्रायेण त्वमरिन्दम ।
तथापि विस्तरेणाद्य वक्तुमत्युत्सुकोस्मि ते ॥ २.
त्वत्समो नाधिकारी स्याद्ब्रह्मविद्यासु कश्चन ।
किङ्करिष्याम्यदेयेन रहस्येनाप्यहं तव ॥ ३.

मत्प्रीतिविषयो लोके त्वदन्यो नैव विद्यते ।
एह्यास्व निकटे पाणिस्त्वद्गात्रस्पर्शमिच्छति ॥ ४.
इत्युक्त्वा स हनूमन्त मापादतलमस्तकं ।
विमर्शन्वक्तुमारेभे तत्वार्थं रघुपुङ्गवः ॥ ५.
अशनायाद्यतीतं यद्ब्रह्मक्षत्रादिवर्जितं ।
पाप्मादिदोषरहितं निश्चलं पूर्णमद्वयम् ॥ ६.
अवस्था त्रितयातीतं पञ्चकोशादिवर्जितं ।
चिन्मात्रं केवलं ब्रह्मसुसूक्ष्मं निर्गुणं परम् ॥ ७.
तदेव मत्स्वरूपं स्यात्पारमार्थिकमद्भुतं ।
तत्तु सर्वेषु नित्येषु वेदान्तेषु प्रतिष्ठितम् ॥ ८.
वेदान्तेतरवाक्यैस्तु न सम्यग्ज्ञातुमर्हसि ।
श्रुतिस्मृतिपुराणेषु श्रुतेरुक्ता हि मानता ॥ ९.
तस्मात्संसारमोक्षार्थी त्वमद्यैवाञ्जनासुत ।
मत्सत्यरूपबोधार्थं वेदान्तान्समुपाश्रय ॥ १०.
साक्षादुपानिषद्देवी सर्वतत्वार्थगर्भिणी ।
तया नाविदितं किञ्चिद्रहस्यं वर्तते क्वचित् ॥ ११.
तामुपाशृत्य मां पृच्छ मद्रूपं पवनात्मज ।
संसारतप्तस्तां गच्छ क्षुधार्तो मातरं यथा ॥ १२.

॥ हनूमान् ॥

वेदान्ताः के रघुश्रेष्ठ वर्तन्ते कुत्र ते वद ।
राम वेदाः कतिविधास्तेषां शाखाश्च राघव ॥ १३.
तासूपनिषदः कास्युः कृपया वद तत्वतः ।
यासामर्थपरिज्ञानान्मुच्येयं भवबन्धनात् ॥ १४.

॥ श्रीरामः ॥

हनूमन्च्छृणु वक्ष्यामि वेदान्तस्थितिमञ्जसा ।
निश्वासभूता मे विष्णोर्वेदा जातास्सुविस्तराः ॥ १५.

तिलेषु तैलवद्वेदे वेदान्तस्सुप्रतिष्ठितः ।
ऋग्वेदादि विभागेन वेदाश्चत्वारईरिताः ॥ १६.

तेषां शाखाह्यनन्तास्युस्तासूपनिषदस्तथा ।
ऋग्वेदस्य तु शाखास्युरेकविंशतिसङ्ख्यया ॥ १७.

नवाधिकशतं शाखा यजुषो मारुतात्मज ।
सहस्रसङ्ख्यया जाताश्शाखास्साम्नः परन्तप ॥ १८.

अथर्वणस्य शाखास्युः पञ्चाशद्भेदतो हरे ।
एकैकस्यास्तु शाखाया एकैकोपनिषन्मता ॥ १९.

तासामेकामृचं भक्त्या यः पठत्यधिकं मयि ।
समत्सायुज्यपदवीं दुर्ल्लभां प्राप्नुयान्नरः ॥ २०.

तेभ्यस्सालोक्यसारूप्यसामीप्येभ्योधिकापि सा ।
सायुज्यमुक्तिः पञ्चम्या कैवल्याभिधया ह्वता ॥ २१.

॥ हनूमान् ॥

इयं कैवल्यमुक्तिर्मे केनोपायेन सिद्ध्यति ।
यया संसारकूपेस्मिन्नभवेत्पतनं पुनः ॥ २२.

॥ श्रीरामः ॥

[ दशोपनिषदः ]

ईश केन कठ प्रश्न मुण्ड माण्डूक्य तित्तिरिः ।
ऐतरेयञ्च च्छान्दोग्यं बृहदारण्यकं तथा ॥ २३.

[ द्वात्रिंशोपनिषदः ]

ब्रह्म कैवल्य जाबाल श्वेताश्वो हंस आरुणिः ।
गर्भो नारायणो हंस बिन्दु नाद शिर शिखा ॥ २४.

मैत्रायणी कौषतिकी बृहज्जाबाल तापिनी ।
कालाग्निरुद्र मैत्रेयी सुबाल क्षुरि मन्त्रिका ॥ २५.

[ अष्टोत्तरशतोपनिषदः ]

सर्वसारं निरालम्बं रहस्यं वज्रसूचिकं ।
तेजो नाद ध्यान विद्या योगतत्वा त्मबोधकम् ॥ २६.

परिव्राट् त्रिशिखी सीता चूडा निर्वाण मण्डलं ।
दक्षिणा शरभं स्कन्दं महानारायणा द्वयम् ॥ २७.

रहस्यं रामतपनं वासुदेवं च मुद्गलं ।
शाण्डिल्यं पैङ्गलं भिक्षु मह च्छारीरकं शिखा ॥ २८.

तुरीय्यातीत सन्यास परिव्राजा क्षमालिका ।
अव्यक्तै काक्षरं पूर्णा सूर्या क्ष्य ध्यात्म कुण्डिका ॥ २९.

सावित्र्या त्मा पाशुपतं परंब्रह्मा वधूतकं ।
त्रीपुरातपन न्देवी त्रिपुरा कठ भावना ॥ ३०.

हृदयं कुण्डली भस्म रुद्राक्ष गण दर्शनं ।
तारसारं महावाक्यं पञ्चब्रह्मा ग्निहोत्रकम् ॥ ३१.

गोपालतपनं कृष्णं याज्ञवल्क्यं वराहकं ।
शाट्यायनी हयग्रीवं दत्तात्रेयञ्च गारुडम् ॥ ३२.

कलि जाबालि सौभाग्य रहस्य ऋच मुक्तिका ।

---

एवमष्टोत्तरशतं भावनात्रयनाशनम् ॥ ३३.

अत्र माण्डूक्यमेकंस्यात्क्रमात्कैवल्यमुक्तये ।
तत्र नैवाधिकारीचेद्दशोपानिषदं पठ ॥ ३४.

तेन लब्ध्वा मम ज्ञानं परोक्षं ब्रह्मलोकतः ।
परं वैकुण्ठमासाद्य मया सह विमोक्ष्यसे ॥ ३५.

जीवन्मुक्तौ तवेच्छा चेद्धीरोः प्राणोत्क्रमादिषु ।
द्वात्रिंशाख्योपनिषदं स्वापरोक्ष्याय तां पठ ॥ ३६.

तत्राप्यारब्धदुःखस्य सत्वात्प्रातीतिकस्य वा ।
विदेहमुक्ताविच्छाचे दष्टोत्तरशतं पठ ॥ ३७.

देहेस्मिन्विद्यमानेपि प्रारब्धक्षयसंभवात् ।
सिध्योद्विदेहकैवल्यं नावकार्या विचारणा ॥ ३८.

यतोऽशीत्युत्तरशतं परश्रुतिसहस्रके ।
अष्टोत्तरशतं सारं दश द्वात्रिंशतोपि च ॥ ३९.

ज्ञानवैराग्यदं पुंसां वासनात्रयनाशनं ।
पूर्वोत्तरेषु विहिततत्तच्छान्तिपुरस्सरं ॥ ४०.

वेदविद्याव्रतस्नातदेशिकस्य मुखात्स्वयं ।
गृहीत्वाष्टोत्तरशतं ये पठन्ति द्विजोत्तमाः ॥ ४१.

तेषामादित्यवद्ज्ञानं स्वयमेव प्रकाशते ।
सदेहा अपि ते सद्यो विदेहास्युर्नसंशयः ॥ ४२.

राज्यं देयं धनं देयं याचतः कामपूरणम् ।
इदमष्टोत्तरशतं न देयं यस्य कस्य चित् ॥ ४३.

नास्तिकाय कृतघ्नाय दुराचाररताय वै ।
मद्भक्तिराहितायापि शास्त्रगर्तेषु मुह्यते ॥ ४४.

गुरुभक्तिविहीनाय दातव्यं न कदाचन ।
सेवापराय शिष्याय हितपुत्राय मारुते ॥ ४५.

मद्भक्ताय सुशीलाय कुलीनाय सुमेधसे ।
सम्यक्परीक्ष्य दातव्यमेवमष्टोत्तरं शतं ॥ ४६.

यः पठेत्पाठयेद्वापि श्रुणुयाच्छ्रावयेदपि ।
प्रारब्धदेहपतने समामेति नसंशयः ॥ ४७.

सकृच्छ्रवणमात्रेण सर्वाघौघनिकृन्तनं ।
मयोपदिष्टं शिष्याय तुभ्यं पवननन्दन ॥ ४८.

इदं शास्त्रं मया दिष्टं गुह्यमष्टोत्तरं शतं ।
ज्ञानतोऽज्ञानतो वापि पठतां बन्धमोचकम् ॥ ४९.

विद्याह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्ठेहमस्मि ।
असूयकायानृजवे शठाय मामाब्रूयाद्वीर्यवती तथास्याम् ॥ ५०.

यमेवैषविद्या श्रुतमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नं ।
अस्माइमामुपसन्नाय सम्यक् परीक्ष्य दद्याद्वैष्णवीमात्मानिष्ठाम् ॥ ५१.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीयपादे सर्ववेदरहस्यार्थासु

श्रीरामगीतासूपानिषत्सु

प्रमाणसार विवरणं नाम

॥ द्वितीयोऽध्यायः ॥

---

॥ हनूमान् ॥

भगवञ्जानकीकान्त जीवस्योत्पत्त्यसंभवात् ।
कार्यतानुपपन्नेति मतमद्वैतिनां खलु ॥ १.

उत्पत्तौ तु विनाशस्याद्विनाशे ब्रह्मतास्य नो ।
तदैकत्वश्रुतेः कोपोऽपरिहार्यः प्रसज्यते ॥ २.

द्वैतसिद्धौ भयान्नित्यं मृत्युसंसारवर्त्मनि ।
अभयं जनकादीनां प्रसिद्धमपि हीयत ॥ ३.

आचार्या याज्ञवल्क्याद्या अद्वैतब्रह्मवादिनः ।
विश्रुतास्तद्भिदालेशोऽप्यत्र शास्त्रे नयुज्यते ॥ ४.

इत्येतत्साधु वाऽसाधु त्वदन्यो धरणीतले ।
वक्तुं शक्तो न मे श्रीमान्विद्यते करुणाम्बुधे ॥ ५.

॥ श्रीरामः ॥

यज्जीवब्रह्मणोरैक्यं कार्यकारणयोरपि ।
मतमद्वैतिनां तत्स्याज्जीवोत्पत्तिश्च तन्मते ॥ ६.

उत्पत्त्यनभ्युपगमे तस्य नाशो नासिध्याति ।
अनाशे द्वैतनित्यत्वात्कोपोऽद्वैतश्रुतेर्ध्रुवं ॥ ७.

जीवस्य द्विविधस्यापि विनाशं द्विविधं शृणु ।
जीवस्त्वंपदवाच्यार्थः संसारी देहवानयम् ॥ ८.

अविद्याजनितस्यास्य विनाशो विकृतेरिव ।
आभ्यन्तरविकारेषु तप्तायःपिण्डवत्सतः ॥ ९.

अन्यस्त्वंपदलक्ष्यार्थो संसारी साक्षिचेतनः ।
कूटस्थः प्रत्यगात्माख्यो बिम्बभूतोपरस्य च ॥ १०.

ब्रह्मविद्योद्भवस्यास्य स्फुलिङ्गस्येव पावकात् ।
विनाशः प्रकृतौ स्वस्यां ब्रह्मण्यद्वयचिद्घने ॥ ११.

यस्माद्भूतानि जायन्ते येन जीवन्ति यत्र च ।
लीय्यन्ते ज्ञेयमेकं तद्ब्रह्मैव हि मुमुक्षुभिः ॥ १२.

भूतानि तानि जीवास्युरुत व्योमादयोऽथवा ।
लोकाः पञ्चीकृताद्येते नान्त्योस्मिन्निर्गुणत्वतः ॥ १३.

कारणं ब्रह्मजीवानां निर्गुणं नेतरद्भवेत् ।
अपञ्चीकृतभूतानामपि तज्जगतां नतु ॥ १४.

जगत्कारणमीशाख्यं सगुणं ब्रह्मयद्भवेत् ।
तत्पञ्चीकृतभूतानां निमित्तं जगतां खलु ॥ १५.

उपादानन्तु मायास्याच्चिदचिद्दलितास्वयं ।
कार्यकारणलोकेश विचारइह निष्फलः ॥ १६.

अध्यात्मशास्त्रमाश्रित्य सद्गुरोः करुणाबलात् ।
जीवब्रह्मविचारेण पुरुषार्थं समश्नुते ॥ १७.

जीवस्य कार्यभूतत्वे निमित्तं ब्रह्मनिर्गुणं ।
उपादानमविद्यास्यादभानावृतिकारणम् ॥ १८.

सर्वज्ञं सर्वलोकेशं मायोपाधिमुमापतिं ।
ध्यात्वेह चित्तशुध्यर्थं भूतयोनिमथाप्नुयात् ॥ १९.

ज्ञेयत्वं भूतयोनेश्च ध्येयत्वमथ तस्य वै ।
स्वतास्सिद्धमतः पूर्वं ज्ञात्वा कैवल्यकांक्षिणः ॥ २०.

ततस्तं निर्गुणं ब्रह्म परिपूर्णं निरन्तरं ।
अभेदेन परं ध्यात्वा यान्ति तत्कांक्षितं ध्रुवम् ॥ २१.

आरंभवादमाशृत्य स्वारुरुक्षुर्विचारयेत् ।
परिणामं समाशृत्य त्वभ्यासी भावयेत्परम् ॥ २२.

विवर्तवादस्त्वारूढे स्वयमेव हि सिध्यति ।
जल्पंस्तदनुरोधेन गच्छेत्स्वानर्थमात्महा ॥ २३.

रज्जुसर्पस्थाणुचोरवन्ध्यापुत्रादिं गोचरः ।
विवर्तवादो नैवेष्टो मुमुक्षोस्संसृतेः परम् ॥ २४.

भृङ्गकीटदधिक्षीरमृद्घटाद्येकगोचरः ।
परिणामसुवादोऽयं ध्रुवमिष्टतमो मतः ॥ २५.

ब्रह्मात्मैक्यानुसन्धानादेकान्ताद्ब्रह्मणात्मनि ।
संयुक्ते बोधमात्रेण तिष्ठन्मुक्तो नसंशयः । २६.

ज्ञानं हि द्विविधं प्रोक्तं स्वरूपं वृत्तिरित्यपि ।
तत्राद्यं निर्गुणं ब्रह्म सत्यानन्तसुखात्मकम् ॥ २७.

अन्यत्तु शुद्धसत्वाख्यं अखण्डाकारमात्मनः ।
परोक्षमपरोक्षञ्चेत्येवं द्वैविध्यमाप्नुयात् ॥ २८.

आद्यात्क्रमेण मुक्तिस्याद्ब्रह्मलोके क्षयं गते ।
द्वितीय्यात्विह कैवल्यं क्षीणे प्रारब्धकर्माणि ॥ २९.

जीवन्मुक्तिश्च देहेस्मिन्विद्यमानेपि सिध्यति ।
अतः कामादिनिर्मुक्तो सततं ब्रह्मभावय ॥ ३०.

यद्ब्रह्मनिर्गुणं प्रोक्तं द्विविधं तत्प्रचक्षते ।
सलक्षणमिति ध्येयं ध्येयातीतमलक्षणम् ॥ ३१.

आद्यञ्च त्रिविधं प्रोक्तं पादैस्सत्वादिभिस्त्रिभिः ।
त्रिपाद्ब्रह्मामृतं यस्मान्नित्यसिद्धस्वभेदवत् ॥ ३२.

तत्र बुद्धिं प्रतिष्ठाप्य स्थिरमासनमास्थितः ।
तादात्म्यं लभते विद्वानल्पमप्यन्तरं विना ॥ ३३.

विजातीय्यसजातीयभेदौ जागतजैव कौ ।
परस्मिन्नैव विद्येते ब्रह्मणि त्रिपदात्मके ॥ ३४.

हीने तु स्वगते भेदे वस्तुनो ध्येयता न हि ।
नमोक्षो ध्येयता हानौ ध्रुवं संसारिणामिह ॥ ३५.

भेदोऽस्ति बन्धावस्थायां जीवात्मपरमात्मनोः ।
मोक्षे त्वभेदएव स्यान्मोक्षातीते न कश्चन ॥ ३६.

बन्धस्य प्रतियोगित्वात्सापेक्षो मोक्षइष्यते ।
निरपेक्षमतीन्द्रयाख्यं* न निरोधइति श्रुतेः ॥ ३७.

अखण्डैकरसांबोधौ मग्नचित्तस्य देहिनः ।
विदेहमुक्ततां प्राहुर्ब्राह्मणाश्रुतिपारगाः ॥ ३८.

समाधियोगयुक्तात्मा त्यक्तलोकादिवासनः ।
निश्चेष्टो निर्विकारश्च विदेहइति कथ्यते ॥ ३९.

दृश्यानुविद्धप्रमुखाः क्रमात्स्युष्षट्समाधयः ।
जलूका न्यायतस्तेषु निष्ठां कुर्वीत बुद्धिमान् ॥ ४०.

समाधिहीनाः पापिष्ठा वाक्यार्थज्ञानमानिनः ।
स्वेच्छाचाररता नित्यं नरकानश्नुवन्ति ते ॥ ४१.

मनो नाशविहीनस्य कथं संसारनिह्नतिः ।
कथं समाधिहीनस्य मनोनाशो भवेदिह ॥ ४२.

---

* अतीताख्यं इतिपाठान्तरम्.

समाधौ विधिबुध्या यः कर्मसाद्दश्यमूहते ।
कल्पकोट्यापि संसारात्तस्य मुक्तिर्न संभवेत् ॥ ४३.

लिङ्गादिस्तु समानो हि श्रूयते ज्ञानयोगयोः ।
एवं सति कथं ज्ञानं केवलं विद्ध्यनाशृतम् ॥ ४४.

मोक्षस्य साधनं ज्ञानमाद्यं वेदान्तवाक्यजं ।
अन्तिमं साधनं योगस्तस्माद्योगं समाश्रय । ४५.

योगश्च द्विविधः प्रोक्तस्सभेदोऽभेदएव च ।
आद्यो बहुविधःप्रोक्तो हठराजादिभेदतः ॥ ४६.

अभेदः प्रकृतिस्त्वेको जीवब्रह्मैक्यलक्षणः ।
समाधिरूपः कैवल्यमुख्यसाधनमिष्यते ॥ ४७.

अस्मिन्नस्य च तद्योगं शास्ति शास्त्रं यतः स्वयं ।
अतो योगाविहीनेन नज्ञानेन विमुक्तता ॥ ४८.

योगाभ्यासरतो विद्वान् वैराग्येण च संयुतः ।
नबिभेति कदाप्यस्मात् संसाराद्दुस्तरादपि ॥ ४९.

उत्तमं योगमास्थाय ज्ञानी विगतकल्मषः ।
माया तत्कार्यपाशेभ्यो विमुक्तस्सुखमश्नुते ॥ ५०.

प्रशान्तेन्द्रियसञ्चारः चित्तक्षोभादिवर्जितः ।
ब्रह्मात्मैक्यमहायोगी सद्यो मुक्तिमवाप्नुयात् ॥ ५१.

योऽयं वेदान्तसिद्धान्तभूतो योगस्समीरितः ।
उपासनमिति प्राज्ञैरिदमेवोच्यते परम् ॥ ५२.

जन्मादिकारणं शान्त उपासीतेति च श्रुतिः ।
अभेदोपासनं सम्यगुपोद्बलयाति स्फुटं ॥ ५३.

उपासनविहीनस्य सर्वशास्त्रविदोपि वा ।
चित्तविक्षेपहानिस्या न्नैव कल्पान्तरैरपि ॥ ५४.

सकामा सगुणोपास्तिर्नृणां भोगाय संभवेत् ।
निष्कामा चित्तशुध्यर्थेत्येवं शास्त्रार्थनिर्णयः ॥ ५५.

वालाग्राङ्गुष्ठनीवार शुकप्रादेशमात्रकः ।
निर्गुणः प्रत्यगात्मायस्तदुपास्तिश्च शुद्धिदा ॥ ५६.

अखण्डसच्चिदानन्द निर्गुणोपासनं महत् ।
सद्यः कैवल्यहेतुस्यादहं ब्रह्मेति चिन्तनम् ॥ ५७.

महावाक्यार्थविज्ञानात्सर्वं मिथ्येति निश्चयं ।
दृढं प्राप्याथ मुक्त्यर्थं तदुपासीत सन्ततम् ॥ ५८.

उपासनं विनाज्ञाना त्केवलाच्चेद्विमुक्तता ।
कन्यां विना विवाहस्यात्केवलेन वरेण हि ॥ ५९.

तादात्म्येन समीपे यज्जीवस्यैवासनं भवेत् ।
तदुपासनमित्युक्तं सर्वदुःखापहं नृणां ॥ ६०.

यदुपास्तिरभेदेन पूर्णबोधस्वरूपदा ।
तामाशृत्यैव सर्वेषामक्षयं सुखमुद्भवेत् ॥ ६१.

देहात्मबुद्धिमाशृत्य संसारे भ्रमतां नृणां ।
कथं भ्रमनिवृत्तिस्याद्ब्रह्मात्मोपासनं विना ॥ ६२.

यस्यासावजडासंवित्स्वयं जीवेशसाक्षिणी ।
आविर्भूतानुसन्धानात्सएव ब्रह्मविद्भवेत् ॥ ६३.

संविदेव पराशक्तिस्सैव ब्रह्म च निर्गुणं ।
तस्मादपि पराचीनमवाङ्मनसगोचरम् ॥ ६४.

अलक्षणमनिर्देश्यमरूपं नाम मात्रवत् ।
अप्रष्टव्यं गुरौ साक्षान्मातिप्राक्षीरिति श्रुतेः ॥ ६९.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीय्यपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
ज्ञानयोगनिरूपणं नाम
॥ त्रितीयोऽध्यायः ॥

---

॥ हनूमान् ॥

सिद्धान्तवस्तुनः प्रश्नः कथं वा प्रतिषिध्यते ।
जीवन्मुक्तिर्मनुष्याणां यद्ज्ञानात्स्याद्रघूद्वह ॥ १.

॥ श्रीरामः ॥

प्रश्नादिविषयस्सत्यस्सुखबोधैकलक्षणः ।
परात्मा परिपूर्णोसावापरोक्ष्येण सिद्ध्यति ॥ २.
वचसां मनसां यत्स्यात् शुद्धानां विषयः परं ।
तद्ब्रह्म मध्यमं विद्धि तन्मे ब्रहीति च श्रुतेः ॥ ३.
तस्य व्युत्पाद्यमानत्वाद्रूपवत्वाच्च नित्यशः ।
ज्ञेयता ध्येयता च स्यात्तं ब्रहन्तमिति श्रुतः ॥ ४.
अथ संपत्स्यइतियदरूपस्याप्निरुच्यते ।
तेन तस्य नशङ्क्यं स्याद्रूपवत्वममुख्यतः ॥ ५.
जीवजन्मादिहेतुत्वं शास्त्रयोनित्वमप्यथ ।
समन्वितश्रुतित्वं च मुख्यजिज्ञास्य वस्तुनि ॥ ६.
अरूपे नैव ते धर्माः कथञ्चित्संभवन्त्यपि ।
अतश्च सूत्रकारेण स्वरूपं हि विचिन्तितम् ॥ ७.

अमायिका नित्यसिद्धा स्वतो नाविद्यकास्तथा ।
चिदानन्दादयो धर्मा निर्विशेषस्य विश्रुताः ॥ ८.

नैतस्य निर्विशेषत्वं हीय्येतासान्निरासतः ।
लीयन्ते रेणुवद्यद्यप्यथाप्यारब्धनिश्चिताः ॥ ९.

असतस्सदनन्यत्वेऽप्यसतोऽन्यद्धि सद्भवेत् ।
असन्निरास कर्तृत्वं सतस्यान्नेतरस्य तु ॥ १०.

सद्वैविध्यादिवादेन नवीनप्रकृतेन च* ।
प्रसिद्धाद्वैतहानिस्यादिति चेत्तन्न दूषणम् ॥ ११.

सामान्यत्वेन बाधस्यादद्वैतस्य तु नान्यथा ।
विशेषद्विविधोक्तेश्चेत्खद्योतेन रवेरपि ॥ १२.

अद्वैतब्रह्मवादोयः पूर्वकैस्सुप्रपञ्चितः ।
परोक्षबोधहेतुत्वात्पूर्वपक्षगतो हि सः ॥ १३.

द्विविधब्रह्मवादोऽयं श्रुतिभिस्सुप्रपञ्चितः ।
अपरोक्षनिदानत्वाद्भजेत्सिद्धान्तपक्षताम् ॥ १४.

ब्रह्मात्मैकत्वविज्ञानं देहाध्यासं निवर्तयेत् ।
यस्य नाहङ्कृतिर्देहे सजीवन्मुक्तइष्यते ॥ . १५.

सत्यत्वं न दृढं यस्य नासत्यत्वं जगत्यपि ।
तटस्थज्ञानवान् मर्त्यः सजीवन्मुक्तइष्यते ॥ १६.

स्वानुभूतिस्समाधौ स्यात् उत्थानानन्तरं ततः ।
स्वप्रज्ञामात्रवान्मर्त्यः सजीवन्मुक्तइष्यते ॥ १७.

---

* सद्वैविध्यादिवादेन प्रकृतेन महामते इति पाठान्तरम्.

साक्षिवृत्तेः पराचीनमखण्डैकरसस्थितेः ।
अर्वाचीनमवस्थानं सजीवन्मुक्तइष्यते ॥ १८.

अखण्डाकारवृत्तिस्याच्चिन्मयी यस्य चेतसि ।
स सचित्तोप्यचित्तस्यात्सजीवन्मुक्तइष्यते ॥ १९.

कर्मिवद्भक्तवच्चापि योगिवद्ज्ञानिवच्च यः ।
व्यवहारैकनिष्ठोऽस्ति सजीवन्मुक्तइष्यते ॥ २०.

देहोऽहमित्ययं बन्धः सदा ब्रह्माहमित्ययं ।
मोक्षस्तस्मादहं बुद्धिं कुर्याद्ब्रह्माणि बुद्धिमान् ॥ २१.

अहं ब्रह्मेति नियता बुद्धिस्याद्यदि सत्तमा ।
तस्य भीतिः कुतो वा स्यात् सर्वत्राप्यभयश्रुतेः ॥ २२.

यस्य देहात्मबुद्धिस्यात् तस्य सर्वगतं भयं ।
तस्मात्सर्वप्रयत्नेन त्यजेद्देहात्मभावनाम् ॥ २३.

जपाकुसुमसंपर्कात्स्फटिको लोहितो यथा ।
गुणत्रयादिसंपर्कात्तथात्मापि जडो भवेत् ॥ २४.

आत्मन्यनात्मतारोपाद्यथा जाड्यं प्रसिध्यति ।
अनात्मन्यात्मतारोपात् तथा जाड्यं हि सिध्यति ॥ २५.

यथाग्नौ तत्वमौष्ण्यं स्यात्तथा चित्वं परात्मनि ।
चिदेकत्वपरिज्ञानात् सद्यः कैवल्यमश्नुते ॥ २६.

अखण्डोऽहमनन्तोऽहं परिपूर्णोऽहमद्वयः ।
इति ध्यानं भवेद्यस्य सजीवन्मुक्ततामियात् ॥ २७.

समाध्यभ्यासहीनश्चेत् दृष्टदुःखोपमर्दितः ।
आरब्धपातपर्यन्तं जगत्पश्यति सत्यवत् ॥ २८.

पारमार्थिकसत्यत्वे प्रणष्टेऽस्य जगत्स्वपि ।
प्रातिभासिकसत्यत्वं सिद्धमारब्धयोगतः ॥ २९.

अस्य दग्धपटन्यायाद्देहादि प्रातिभानतः ।
दुःखं तात्कालिकं किञ्चिद्भवेन्नतु जनिः पुनः ॥ ३०.

गळितेषु समस्तेषु सञ्चितागामि कर्मसु ।
प्रारब्धमेकं जागर्ति जीवन्मुक्ते फलाय हि ॥ ३१.

प्रारब्धकर्मजनितसुखदुःखवतोऽपि च ।
कैवल्यानुपरोधेन सतोद्यैवास्य मुक्तता ॥ ३२.

देहादिषु विकारेषु सदाऽहं भाववर्जिते ।
निर्विकारात्मबुद्धौ च मुक्तत्वं न विरुध्यते ॥ ३३.

शुक्ल शोणित मज्जास्थि रोम नाडी नखादिषु ।
अहं बुद्धिविहीनो यस्तस्य बन्धः कथं भवेत् ॥ ३४.

वाक्पाणिपायुगुह्याङ्घ्रिष्वहंभावविवर्जितः ।
कर्मेन्द्रियेषु यो विद्वान् तस्य बन्धः कथं भवेत् ॥ ३५.

प्राणापानसमानाश्च व्यानोदानौ च वायवः ।
नाहमस्मीति यो वेद तस्य बन्धः कथं भवेत् ॥ ३६.

नागः कूर्मश्चकृकरो देवदत्तो धनञ्जयः ।
एतेनास्मीत्युपप्राणाः तस्य बन्धः कथं भवेत् ॥ ३७.

श्रोत्रत्वङ्नेत्ररसना घ्राणाख्यानीन्द्रियाणि च ।
नाहमस्मीति विदुषः तस्य बन्धः कथं भवेत् ॥ ३८.

मनो बुद्धिरहङ्कारश्चित्तं चेति चतुष्टयं ।
यस्य नात्मतया भाति तस्य बन्धः कथं भवेत् ॥ ३९.

अव्यक्तमहदादीनि विक्षेपावरणानि च ।
यस्यानात्मतया भान्ति तस्य बन्धः कथं भवेत् ॥ ४०.

अवस्था त्रितयादन्यत्तथा जीवत्रयादपि ।
गुणत्रयाद्विदो ब्रह्म तस्य बन्धः कथं भवेत् ॥ ४१.

यस्य प्रज्ञास्त्यनुस्यूता परमात्मैकगोचरा ।
सर्वत्र व्यवहारेऽपि तस्य बन्धः कथं भवेत् ॥ ४२.

शान्ति दान्त्यादयो धर्मा यस्य विद्या समुद्भवाः ।
सहजा भान्ति सततं सएव पुरुषोत्तमः ॥ ४३.

कामक्रोधादयो धर्मा यस्या विद्या समुद्भवाः ।
नष्टबीजा न शोभन्ते सएव पुरुषोत्तमः ॥ ४४.

अत्याश्चर्यनिमित्तास्वप्यणिमाद्यासु सिद्धिषु ।
यस्य नाश्चर्यगन्धोऽपि सएव पुरुषोत्तमः ॥ ४५.

विचित्ररचनाद्येषु पारमेश्वरकर्मसु ।
यस्य न स्मयलेशोऽपि सएव पुरुषोत्तमः ॥ ४६.

चतुर्विधासु सालोक्याद्यासु मुक्तिषु यस्य च ।
स्वप्नेऽपि जायते नेच्छा सएव पुरुषोत्तमः ॥ ४७.

जीवन्मुक्तस्य माहात्म्यं तादृशं पवनात्मज ।
कोऽपि वर्णयितुं शक्तो नादिशेषोप्यसंशयम् ॥ ४८.

यज्जन्म नाशविनिहन्तृसमस्तशोक मोहादिनाशकरमात्मसुखैकबीजं ।
सर्वश्रुतिस्मृतिपुराणवचः प्रसिद्धं जीवाद्विमुक्तिपदमत्र सुदुर्लभं स्यात् ॥ ४९.

बाह्यान्तराखिलविकारविलापनेन शिष्टे परत्र विगुणे परिपूर्णबोधे ।
सद्ब्रह्मणि स्थिरमनाः पवनात्मज त्वं जीवद्विमुक्तिपदमत्र लभस्व शीघ्रम् ॥ ९०.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीय्यपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
जीवन्मुक्तिनिरूपणं नाम
॥ चतुर्थोऽध्यायः ॥

---

॥ हनूमान् ॥

भगवन्सर्वलोकेश वेदार्थज्ञानसागर ।
श्रीराम निखिलाराम भक्तवत्सल राघव ॥ १.

त्वन्मुखाम्बुजनिष्यन्दज्जीवन्मुक्तकथामृतं ।
कर्णाभ्यामागळं पीत्वा नित्यतृप्तोस्म्यसंशयं ॥ २.

तथापि संशयः कश्चिन्मनस्याविर्भवत्यहो ।
कथं विदेहमुक्तिस्याद्देहे प्रारब्धजे सति ॥ ३.

जीवन्मुक्तस्य देहान्ते वैदेहीमुक्तिरित्यमुम् ।
प्रसिद्धार्थं विहायात्र* भवताप्युच्यतेन्यथा ॥ ४.

देहात्मबुद्धिहीनत्वाद्विदेहइति चेदिह ।
जीवन्मुक्तसमानत्वान्नविशेषोत्र सिध्यति ॥ ५.

देहविस्मृतिमत्वेन वैलक्षण्यं विदेहिनः ।
इतिचेदर्थवादोयं ननु साक्षाद्विदेहता ॥ ६.

देहमिथ्यामतेर्यस्य विस्मृतात्मतनोश्च वा ।
यदात्र प्रपतेद्देहस्तदैवेति मतिर्मम ॥ ७.

---

* विहायेव इतिपाठान्तरम्.

॥ श्रीरामः ॥

प्रारब्धकार्यभूतस्मिन्देहे सत्यपि मारुते ।
विदेहमुक्तएवासौ येन देहोत्र विस्मृतः ॥ ८.
सर्वोपनिषदामेष रहस्यर्थो यथार्थतः ।
तुभ्यं हि कपिशार्दूल मयोक्तो नान्यथा भवेत् ॥ ९.
अत्यंतदेहपाते तत्प्रसिद्धिरविचारतः ।
बन्धमोक्षाविदूरस्य विरूपस्यैव वस्तुनः ॥ १०.
सरूपनष्टचित्तासुरखण्डाकारवृत्तिमान् ।
जीवन्मुक्तइति प्रोक्तस्सर्वमिथ्यात्वनिश्चयात् ॥ ११.
अरूपनष्टचित्तासुरखण्डैकरसात्मवान् ।
विदेहमुक्तस्संप्रोक्तः सर्वविस्मृतिमत्वतः ॥ १२.
शिष्योत्तमाय भक्ताय परप्रेमास्पदाय ते ।
अर्थवादवचस्सत्यमहं ब्रूयां किमादरात् ॥ १३.
विदेहमुक्त्यतीतान्तां देहपातोत्तरोद्भवां ।
नावस्थां विद्धिमुक्ति न्त्वमवाङ्मनसगोचराम् ॥ १४.
यस्य वर्णाश्रमाचारः सुप्तहस्तस्थपुष्पवत् ।
गाळितस्स्वयमेवात्र विदेहो मुक्तएव सः ॥ १५.
सज्जनैः पूजिते देहे दुर्जनैः पीडितेपि वा ।
सुखदुःखे न यस्य स्तो विदेहो मुक्तएव सः ॥ १६.
बालोन्मत्तपिशाचादिचर्यावान्योगिनां वरः ।
सर्वतापविनिर्मुक्तो विदेहो मुक्तएव सः ॥ १७.
इदंभावविहीनो योस्त्यहंभावविवर्जितः ।
तत्वंभावविहीनश्च विदेहो मुक्तएव सः ॥ १८.

ब्राह्मणः क्षत्रियो वैश्यश्शूद्रश्चेति भिदा मतिः ।
न जायते कदाप्यत्र विदेहो मुक्तएव सः ॥ १९.

यथा बधिरमूकान्धपङ्गुषण्डादयास्थिताः ।
तथा निरिन्द्रियो विद्वान्विदेहो मुक्तएव सः ॥ २०.

व्यवहारदशा यस्य नैव भाति कदाचन ।
जाग्रदादिविनिर्मुक्तो विदेहो मुक्तएव सः ॥ २१.

दृष्टृदर्शनदृश्यादिभेदः प्रातीतिकोपि वा ।
यस्य नोदेति पूर्णात्मा विदेहो मुक्तएव सः ॥ २२.

पशुपक्षिमृगा यस्मान्नोद्विजन्तेपि यस्तथा ।
तेभ्यो नो द्विजते नित्यं विदेहो मुक्तएव सः ॥ २३.

अखण्डैकरसाकारमखण्डैकरसाशनं ।
अखण्डैकरसासीनं विषया न स्पृशन्ति तम् ॥ २४.

अखण्डैकरसाचारमखण्डैकरसाश्रयं ।
अखण्डैकरसे मग्नं विबुधाः पूजयन्तितम् ॥ २५.

अखण्डैकरसोल्लासमखण्डैकरसोन्मुखं ।
अखण्डैकरसे लीनं वेदान्ता घोषयन्ति तम् ॥ २६.

अखण्डैकरसादन्यदणुमात्रमपि क्षणं ।
यस्य स्फुरति नैवात्र स्थितप्रज्ञस्स उच्यते ॥ २७.

अक्षोभ्यश्चातिगंभीरो निस्तरङ्गसमुद्रवत् ।
निश्चेष्टो निर्विकारश्च स्थितप्रज्ञस्स उच्यते ॥ २८.

यस्याजगरवन्निष्ठा मेरुवच्च विनिश्चला ।
सर्ववृत्तिविनिर्मुक्तास्थितप्रज्ञस्स उच्यते ॥ २९.

विदेहोस्मीति च प्रज्ञा यस्य नैव प्रजायते ।
सदेहोपि विदेहो यस्स्थितप्रज्ञस्स उच्यते ॥ ३०.

|| हनूमान् ||

स्वामिन्नमस्ते क्षन्तव्यो मेऽपराधो रघूद्वह ।
प्रष्टव्यं मेह्यभूद्भूरि श्रवणादुत्तरोत्तरम् ॥ ३१.
अखण्डैकरसादन्यदणुमात्रं न विद्यते ।
इति यद्भवता प्रोक्तं तत्र मे संशयो महान् ॥ ३२.
लब्धव्यता श्रुतिप्रोक्ता रसस्यैव यतस्ततः ।
लब्धादिभेदसंसिद्धौ कथमद्वैतसंस्थितिः ॥ ३३.
खण्डद्वैतारसापेक्षोह्यखण्डैकरसो भवेत् ।
निरपेक्षमुदासीनमद्वैतं ब्रह्मविश्रुतम् ॥ ३४.
तादात्म्यं सततं प्राप्तो व्यवहार्यश्च निर्गुणः ।
व्यवहार्यो भवच्छब्दैरखण्डैकरसादिभिः ॥ ३५.
उत्पाद्यत्वं विकार्यत्वं संस्कार्यत्वमथाण्यता ।
एते हि ब्रह्मणो धर्माः प्रतिषिद्धा बुधैरपि ॥ ३६.
तस्माज्जीवन्विमुक्तस्य प्रयत्नेन विना स्वयं ।
विदेहमुक्तिर्देहान्ते भवेन्न तु समाधिभिः ॥ ३७.
जीवन्मुक्तिपदञ्चैवं सति प्राप्यं समाधिभिः ।
सगुणं पूर्वपक्षत्वाद्धेयत्वाच्चेति मे मतिः ॥ ३८.

|| श्रीरामः ||

प्रवृद्धिस्संशयस्यात्र क्षेमायैव महामते ।
यतस्साधुर्दृढतरो निश्चयस्ते भविष्यति ॥ ३९.

न च मे क्रोधहेतुस्यात्प्रश्नोयं बहुळोपि वा ।
याज्ञवल्क्यादयः क्रुद्धाः प्रश्नान्नैवंविधाच्छ्रुतौ ॥ ४०.

कथमद्वैतहानिस्याल्लब्धव्यत्वे रसात्मनः ।
तरणौ तरुणे वृद्धिस्तमसः केन दृश्यते ॥ ४१.

क्वा निवर्त्य सापेक्षस्त्वयमास्ति निवर्तकः ।
अतो निवर्तकाद्वैतं निवर्त्यद्वैत कांक्षिनो ॥ ४२.

नैरपेक्ष्यादिकं सिद्धमेवं साति परात्मनः ।
व्यवहार्यत्वमप्यस्य श्रुतिशब्दैस्तथाण्यता ॥ ४३.

यदन्यत्पूर्वमुदित मवाङ्मनसगोचरम् ।
अप्रष्टव्यं भवेयुस्ते तत्र नोत्पाद्यतादयः ॥ ४४.

निर्गुणब्रह्मरूपत्वाद्द्वयोर्मुक्त्योश्च साधनैः ।
समाधिभिः क्रमेणात्र प्राप्यता नविरुद्यते ॥ ४५.

जीवन्मुक्तेर्न हेयत्वं सगुणत्वञ्च सम्मतं ।
माया गुणविहीनेन प्रार्थ्यत्वात्तन्मुमुक्षुणा ॥ ४६.

मारुते त्वम्मदुक्तार्थमूहापोहविचक्षण ।
सम्यगालोच्य मनसि स्थिरमेवावधारय ॥ ४७.

विदेहमुक्तिं सम्प्राप्ता माण्डव्यजनकादयः ।
बहवः श्रुतिभिः प्रोक्ताः तन्माकुर्वत्र संशयम् ॥ ४८.

अखण्डैकरसे ब्रह्मण्यनुस्यूततयाभृशं ।
अभिध्याते मनोनाशस्समूलो भवति ध्रुवं ॥ ४९.

विरूपाख्ये मनोनाशे प्राप्ते तु विषयैस्सह ।
सद्यो विदेहकैवल्यं प्राप्नुयादुक्तलक्षणम् ॥ ५०.

भाविभोगविरक्ता हि जीवन्मुक्त्यधिकारिणः ।
भव्यभोगविरक्तास्तु वैदेह्यामधिकारिणः ॥ ९१.

वनेषु पृथ्वीधरकन्दरेषु ये नित्यबोधामृतलीनचित्ताः ।
संशेरते पाक्षिकृतात्मनीड तर्णोत्तमाङ्गा नमएव तेभ्यः ॥ ९२.

अनन्यरूपैर्गतसर्वबन्धैः अखण्डबोधैकरसात्मनिष्ठैः ।
व्युत्थानहीनैः पुरुषोत्तमैस्तैः क्षणान्निवासोत्र सुदुर्लभोहि ॥ ९३.

कश्चिन्मुमुक्षुर्नरकोटिषु स्यात् तेषामनेकेषु परात्मवेत्ता ।
कश्चिच्च तेषामपि जीवमुक्तः तेषामनेकेषु विदेहमुक्तः ॥ ९४.

विदेहमुक्तस्य तु तां स्वनिष्ठां सहस्रवक्त्रश्चतुराननो वा ।
षडाननः पञ्चमुखोपि शक्तो नवेदितुं वेत्ति सएव साक्षात् ॥ ९५.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीयपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
विदेहमुक्ति निरूपणं नाम
॥ पञ्चमोऽध्यायः ॥

---

॥ हनूमान् ॥

सर्वज्ञ करुणासिन्धो रघुनायक साध्वहं ।
सर्ववेदान्तसारांशं जानामि त्वदनुग्रहात् ॥ १.

तथापि विषयेष्वेता नेन्द्रियाणि पतन्ति मे ।
मत्तेभगण्डतलयोः भ्रमराइव वेगतः ॥ २.

विषयासक्तमनसो मम निर्विषये रतिः ।
कथं स्यादिति चिन्ताग्निर्मां दहत्यधिकं विभो ॥ ३.

येनेन्द्रियाणां विषयेष्वे तेषामरतिर्भवेत् ।
तमुपायं वद क्षिप्रं मयि ते करुणास्ति चेत् ॥ ४.

॥ श्रीरामः ॥

मारुते तव वक्ष्यामि सावधानमनाश्श्रुणु ।
महद्भिस्संश्रितं नित्यं विषयारातिकारणम् ॥ ५.

वासनाक्षय विज्ञान मनोनाशाभिधं त्रयं ।
समकालं समभ्यस्तं येनैव विषया जिताः ॥ ६.

एकैकशो निषेव्यन्ते यद्येते चिरमप्यलं ।
तन्न सिद्धिं प्रयच्छन्ति मन्त्रास्संकीर्णिता इवा ॥ ७.

वासना संपरित्यागे यदि यत्नं करोषि भो ।
यावद्विलीनं नमनो न तावद्वासनाक्षयः ॥ ८.

नक्षीणा वासना यावाच्चित्तं तावन्न शाम्यति ।
यावन्न तत्वविज्ञानं तावाच्चित्तशमः कुतः ॥ ९.

यावन्न चित्तोपशमो न तावत्तत्ववेदनम् ।
यावन्न वासनानाशः तावत्तत्वागमः कुतः ॥ १०.

यावन्न तत्वसंप्राप्तिर्नतावद्वासनाक्षयः ।
तत्वज्ञानं मनो नाशो वासनाक्षयएव च ॥ ११.

मिथः कारणतां गत्वा दुस्साधानि स्थितान्यतः ।
भोगेच्छां दूरतस्त्यक्त्वा त्रयमेतत्समाचर ॥ १२.

विदेहमुक्तिकामस्य पूर्वोक्तं साधनत्रयं ।
अवश्यं साधनीयंयन्मारुते नान्यथा हि सा ॥ १३.

॥ हनूमान् ॥

जीवन्मुक्तस्य भगवन् ब्रह्मात्मैक्यं प्रपश्यतः ।
सर्वानर्थनिवृत्तिस्यादानन्दावाप्तिरेव च ॥ १४.

इमास्तस्य भवेयुश्चेन्महाविषयवासनाः ।
मुक्तत्वं नैव तस्यात्र वक्तुं शक्यं कथञ्चन ॥ १५.

विज्ञानवत्वमप्यस्य प्रसिद्धं चामनस्कता ।
अज्ञस्य समनस्कत्वात्संसारित्वं स्फुटं भुवि ॥ १६.

समकालं त्रयाणाञ्च कःक्षमोऽभ्यासकर्मणि ।
एकैकस्याप्यहं मन्ये सेवनं दुर्लभं प्रभो ॥ १७.

॥ श्रीरामः ॥

प्रारब्धव्यतिरिक्ताये संञ्चितागामि रूपिणः ।
अनर्थाः कर्मसंज्ञास्ते जीवन्मुक्तेनिवर्तिताः ॥ १८.

दृष्टदुःख समेतत्वादानन्दावाप्तिरस्य च ।
साङ्कुशैव तदन्यस्यत्वदेहस्य निरङ्कुशा ॥ १९.

आरब्धवासना एता अयथापूर्वलक्षणाः ।
जीवन्मुक्तिविरोधिन्यो न भवेयुः कथञ्चन ॥ २०.

सम्यग्ज्ञानित्वमस्यस्यान्नैकात्म्यज्ञानिता तथा ।
सरूपनष्टचित्तत्वन्नत्वरूपामनस्कता ॥ २१.

समकालं त्रयाभ्यासे क्षमस्यात्वादृशो भुवि ।
सदागतिसुतोपित्वमसङ्गसुतएवाहि । २२.

सङ्गस्तेविषयैरेतैर्गन्धमात्रोपि मारुते ।
न भवेदिति सम्मन्ये सुलभं त्रयसेवनं ॥ २३.

त्रयएते समायावन्नाभ्यस्ताश्च पुनःपुनः ।
तावन्न पदसंप्राप्तिर्भवत्यपि समा शतैः ॥ २४.

त्रिभिरेतैश्चिराभ्यस्तैर्हृदयग्रन्थयो दृढाः ।
निश्शङ्कमेव त्रुट्यन्ति बिसच्छेदाद्गुणा इव ॥ २५.

जन्मान्तरशताभ्यस्ता मिथ्या संसारवासना ।
साचिराभ्यासयोगेन विना न क्षीयते क्वचित् ॥ २६.

लोकवासनया जन्तोश्शास्त्रवासनयापि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ॥ २७.

द्विविधो वासनाव्यूहश्शुभश्चैवाशुभश्च ते ।
वासनौघेन शुद्धेन तत्र चेदनुनीय्यसे ॥ २८.

तत्क्रमेणाशु तेनैव मामकं पदमाप्नुहि ।
अशुभव्यूहनाशाच्च सद्यस्तृप्तिर्निरङ्कुशा ॥ २९.

अथ चेदशुभो भावस्त्वां योजयति सङ्कटे ।
प्राक्तनस्तदसौ यत्नाज्जेतव्यो भवता कपे ॥ ३०.

शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥ ३१.

अशुभेषु समाविष्टं शुभेष्वेवावतारयेत् ।
अशुभाच्चालितं याति शुभं तस्मादपीतरत् ॥ ३२.

पौरुषेण प्रयत्नेन लाळयेच्चित्तबालकं ।
तदभीष्टप्रदानेषु प्रवृत्तइव संस्थितः ॥ ३३.

द्रागभ्यासवशाद्याति यदा ते वासनोदयः ।
तदाभ्यासस्य साफल्यं विद्धित्वमरिमर्दन ॥ ३४.

सन्दिग्धायामपि भृशं शुभामेव समाचर ।
शुभायां वासनावृद्धौ न दोषोस्ति* मरुत्सुत ॥ ३५.
अशुभैर्वासनाव्यूहैर्मनो बद्धं विदुर्बुधाः ।
सम्यग्वासनया त्यक्तं मुक्तमित्यभिधीय्यते ॥ ३६.
मनो निर्वासनीभावमाचराशु महाकपे ।
सम्यगालोकनात्सत्याद्वासना प्रविलीयते ॥ ३७.
अखण्डाकारवृत्या च द्विधाऽखण्डरसेन च ।
वासना विलये चेतश्शममायाति दीपवत् ॥ ३८.
वासनां संपरित्यज्य मयि चिन्मात्रविग्रहे ।
यस्तिष्ठति गतस्नेहस्सोहं सच्चित्सुखात्मकः ॥ ३९.
समाधिमथकर्माणि माकारोतु करोतु वा ।
हृदयेनात्तसर्वेहो मुक्तएवोत्तमाशयः ॥ ४०.
सद्यो मुक्ताश्च चत्वारो नूनं ब्रह्मविदादयः ।
तथापि तारतम्येन दृष्टदुःखं हि सिध्यति ॥ ४१.
तस्मात्समाधींश्चतुरो निर्विकल्पादिकान् क्रमात् ।
कर्माण्यपि च नित्यानि कुर्यादेव महामतिः ॥ ४२.
नैष्कर्म्येण न तस्यार्थस्तस्यार्थोस्ति न कर्मभिः ।
न समाधानजण्याभ्यां यस्य निर्वासनं मनः ॥ ४३.
दृष्टदुःखनिवृत्यर्थं लोकक्षेमार्थमेव वा ।
नैष्कर्म्यादिकमात्मज्ञश्शुभं नित्यं समाचरेत् ॥ ४४.
संत्यक्तवासनान्मौनादृते नास्त्युत्तमं पदं ।
अशुभा वासनाच्छिन्धि गृहाण शुभवासनाः ॥ ४५.

---

* दोषाय इतिपाठान्तरम्.

वासनाहीनमप्येतच्चक्षुरादीन्द्रियं स्वतः ।
प्रवर्तते बहिस्स्वार्थे वासनामात्रकारणम् ॥ ४६.

अयत्नोपनतेष्वक्षि दृग्द्रव्येषु यथा पुनः ।
नीरागमेव पतति तद्वत्कार्येषु धीरधीः ॥ ४७.

भाव संवित्प्रकटितामनुरूपाञ्च मारुते ।
चित्तस्योत्पत्तिपरमां वासनां मुनयो विदुः ॥ ४८.

दृढाभ्यस्त पदार्थैकभावनादातिचञ्चलं ।
चित्तं सञ्जायते जन्म जरामरणकारणम् ॥ ४९.

वासनावशतः प्राणस्स्पन्दते न च वासना ।
क्रियते चित्तबीजस्य तेन बीजाङ्कुरक्रमः ॥ ५०.

द्वे बीजे चित्तवृक्षस्य प्राणस्पन्दनवासने ।
एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वेच विनश्यतः ॥ ५१.

असङ्गव्यवहारत्वाद्भवभावनवर्जनात् ।
शरीरनाशदर्शित्वाद्वासना न प्रवर्तते ॥ ५२.

वासना संपरित्यागाच्चित्तं गच्छत्यचित्ततां ।
अवासनत्वात्सततं यदा न मनुते मनः ॥ ५३.

अमनस्ता तदोदेति परमोपशमप्रदा ।
विज्ञानञ्च प्रवर्धेत सद्यः कैवल्यकारणम् ॥ ५४.

अव्युत्पन्नमना यावद्भवानज्ञात तत्पदः ।
गुरुशास्त्रप्रमाणैस्तु निर्णीतन्तावदाचर ॥ ५५.

ततःपक्वकषायेन नूनं विज्ञातवस्तुना ।
शुभोप्यसौ त्वया त्यक्तो वासनौघो भवेत्स्वयं ॥ ५६.

द्विविधश्चित्तनाशोस्ति सरूपोऽरूपएव च ।
जीवन्मुक्तौ सरूपस्स्यादरूपो देहमुक्तिगः ॥ ५७.
अस्य नाशमिदानीं त्वं पावने शृणु सादरम् ।
चित्तनाशाभिधानं हि यदा ते विद्यते पुनः ॥ ५८.
मैत्र्यादिभिर्गुणैर्युक्तं शान्तिमेति न संशयः ।
भूयोजन्म विनिर्मुक्तं जीवन्मुक्तस्य तन्मनः ॥ ५९.
सहस्राङ्कुरशाखाग्र*फलपल्लवशालिनः ।
अस्य संसारवृक्षस्य मनो मूलमिदं स्थितम् ॥ ६०.
सङ्कल्पएव तन्मन्ये सङ्कल्पोपशमेन तत् ।
शोषयाशु यथाशोषमेति संसारपादपः ॥ ६१.
निस्सङ्कल्पसमाध्याख्यस्सर्वसंकल्पशोषणः ।
उपायएकएवास्ति मनसस्स्वस्यनिग्रहे ॥ ६२.
मनसोभ्युदयो नाशो मनो नाशो महोदयः ।
ज्ञमनोनाशमभ्येति मनोज्ञस्य हि शृङ्खला ॥ ६३.
यस्य निर्वासनो चित्तो बोधस्सज्ञानिनां वरः ।
सवासनस्साचित्तस्तु सुलभो निष्प्रयोजनः ॥ ६४.
आहुश्शुभेच्छादि समाह्वयाश्शुभाः श्रुत्यन्तसिद्धाः खलु सप्तभूमिकाः ।
एकैककस्यैतदनुव्रजत्रयं चिन्त्याःपुरोक्तोपि च सप्तसप्त ताः ॥ ६५.
पुण्यैर्महद्भिर्जननान्तरोद्भवैस्संप्रापणीया यतआद्यभूमिका ।
आरूढएनामपि नैव संसृतौ वसन् प्रपञ्चात्प्रभवेद्विलक्षणः ॥ ६६.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीय्यपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
वासनाक्षयादि निरूपणं नाम
॥ षष्ठोऽध्यायः ॥

* शाखात्म इति पाठान्तरम्.

॥ हनूमान् ॥

भगवन् वेदतत्वज्ञ न जाने सप्तभूमिकाः ।
यास्सर्वतत्वसारांशभूतास्त्वमभिमन्यसे ॥ १.

सप्तभूमी* प्रबोधेन यथाहं रघुनायक ।
कृतार्थस्स्यां तथा सम्यक् ब्रूहि मे करुणानिधे ॥ २.

॥ श्रीरामः ॥

ज्ञानभूमिश्शुभेच्छास्यात्प्रथमा समुदीरिता ।
विचारणाद्वितीया तु तृतीया तनुमानसी ॥ ३.

सत्वापत्तिश्चतुर्थीस्यात्ततोऽसंसक्तिनामिका ।
पदार्थभावनाषष्ठी सप्तमी तुर्यगास्मृता ॥ ४.

स्थितः किं मूढ एवास्मि प्रेक्ष्योहं शास्त्रसज्जनैः ।
वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥ ५.

शास्त्रसज्जनसंपर्कवैराग्याभ्यासपूर्वकं ।
सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥ ६.

विचारणा शुभेच्छाभ्यां इन्द्रियार्थेष्वरक्तता† ।
यत्र सा तनुतामेति प्रोच्यते तनुमानसी ॥ ७.

भूमिकात्रितयाभ्यासाच्चित्तेर्थविरतेर्वशात् ।
सत्वात्मनि स्थिते शुद्धे सत्वापत्तिरुदाहृता ॥ ८.

दशाचतुष्टयाभ्यासादसंसर्गफला तु या ।
रूढसत्वचमत्कारा प्रोक्ताऽसंसक्तिनामिका ॥ ९.

---

* एतद्विवरणं वराहोपनिषदि चतुर्थाध्याये श्रूयते.
† अरक्तया इति पाठान्तरम्.

भूमिका पञ्चकाभ्यासात्स्वात्मारामतया भृशं ।
आभ्यन्तराणां बाह्यानां पदार्थानामभावनात् ॥ १०.

परप्रयुक्तेन चिरप्रयत्नेनावबोधनं ।
पदार्थभावना नाम षष्ठीभवति भूमिका ॥ ११.

षड्भूमिका चिराभ्यासाद्भेदस्यानुपलंभनात् ।
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगागतिः ॥ १२.

शुभेच्छादित्रयं भूमिभेदाभेदयुतं स्मृतं ।
यथावद्भेदबुध्येदं जगज्जाग्रति दृश्यते ॥ १३.

अद्वैते स्थैर्यमायाते द्वैते च प्रशमं गते ।
पश्यंति स्वप्नवल्लोकं तुर्यभूमिषु योगतः ॥ १४.

विच्छिन्नशरदभ्रांशविलयं प्रविलीयते ।
सत्वावशेषएवास्ते मारुते त्वं दृढीकुरु ॥ १५.

पञ्चभूमिं समारुह्य सुषुप्तपदनामिकां ।
शान्ताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रके ॥ १६.

अन्तर्मुखतया नित्यं बहिर्वृत्तिपरोपि सन् ।
परिशान्ततया नित्यं निद्रालुरिव लक्ष्यते ॥ १७.

कुर्वन्नभ्यासमेतस्यां भूम्यां सम्याग्विवासनः ।
सप्तमीगूढसुप्त्याख्या क्रमप्राप्ता पुरातना* ॥ १८.

यत्र नासन्नसद्रूपो नाहं नाप्यनहङ्कृतिः ।
केवलं क्षीणमनन आस्ते द्वैतेऽतिनिर्भयः ॥ १९.

---

* षष्ठीं गाढसुषुप्त्याख्यांक्रमात्पतति भूमिकाम् इति पाठान्तरम् आनन्दाश्रमसंस्कृत ग्रन्थावल्यां विंशतिसंख्याक जीवन्मुक्ति विवेके एकोननवतिपृष्ठे द्रष्टव्यम्.

मुमुक्षवः क्रमेण स्युः भूमित्रयविहारिणः ।
ब्रह्मवित्तुर्यभूम्यां स्यात् पञ्चम्यां ब्रह्मविद्वरः ॥ २०.

षष्ठ्यां वरीयान् सप्तम्यां वरिष्ठस्त्वात्मवेदिनां ।
जीवन्मुक्ता इति ख्याताश्चत्वारोमी महत्तमैः ॥ २१.

विदेहमुक्तो नैतेभ्यो व्यतिरिक्तस्समीर्यते ।
विस्मृतत्यक्तदेहत्वात्तत्वं वर्यवरिष्ठयोः ॥ २२.

भाविदेह विहीनत्वा त्तयोर्विद्वरयोरपि ।
विदेहत्वमिहप्राज्ञै रादरादुपचर्यते ॥ २३.

॥ हनूमान् ॥

अज्ञान मावृति स्तद्वाद्विक्षेपश्च परोक्षधीः ।
अपरोक्षमति श्शोकमोक्ष स्तृप्ति र्निरङ्कुशा ॥ २४.

इत्येवमुच्यमानाश्च सप्तावस्था रघूद्वह ।
पूर्वोक्तसप्तभूमिभ्यः किमन्यानेति संशयः ॥ २५.

॥ श्रीरामः ॥

मन्यसे त्वमनन्यास्तास्सङ्ख्यासामान्यदर्शनात् ।
सम्यग्विचार्यमाणासु सूक्ष्मदृष्ट्याप्टथक्स्थिताः ॥ २६.

परोक्षबुध्या विक्षेपमपरोक्षाधियाऽवृति ।
शोकमोक्षेन चाज्ञानं हन्त्यन्यात्ववाशिष्यते ॥ २७.

विक्षेपावृतिमूलत्वात् प्रतिबन्धेतरत्वतः ।
परोक्षज्ञानतोऽज्ञानं ननिवर्तेत तद्ध्रुवम् ॥ २८.

कार्यत्वेनाद्यहेयत्वात् विक्षेपस्य परोक्षतः ।
ज्ञानतश्श्रवणोत्थत्वान्निवृत्तिरुचिता खलु ॥ २९.

याश्चतस्रोप्यवस्थास्ताः परोक्षज्ञानपूर्विकाः ।
सप्तभूम्यन्तरस्थास्यु रज्ञानादि त्रयं न तु ॥ ३०.

अवस्थाद्वयवद्भूमित्रयमन्यच्चतुष्टयं ।
तदन्यद्वयवद्विद्धि सूक्ष्मदृष्ट्याऽञ्जनासुत ॥ ३१.

जीवन्मुक्तस्य कैवल्या च्छोकमोक्षस्समाधिषु ।
विदेहस्य तु सन्तृप्तिस्समाध्युत्थानवर्जनात् ॥ ३२.

ब्रह्मत्वं प्रकृतित्वंच पुरुषत्वं तथेशता ।
आविद्याऽवरणत्वं च जीवत्वञ्च विकारता ॥ ३३.

इत्यवस्थाश्च सप्तैताः सप्तभूमीतराश्श्रुताः ।
सङ्ख्या सामान्यबुध्या तदनन्यत्वभ्रमं त्यज ॥ ३४.

॥ हनूमान् ॥

ब्रह्मत्वाद्यास्सावस्तारमवस्थास्सप्त च प्रभो ।
दासोऽहं श्रोतुमिच्छामि जानकीप्राणनायक ॥ ३५.

॥ श्रीरामः ॥

आत्मविद्या मया लब्धा श्रीवसिष्ठात्सनातना* ।
ब्रह्मत्वं मे सदानित्यं सच्चिदानन्दरूपतः ॥ ३६.

प्रकृतित्वं ततस्स्पष्टं सत्वादिगुणसाम्यतः ।
तस्यामाभाति चिच्छाया दर्पणे प्रतिबिंबवत् ॥ ३७.

तेन चित्प्रतिबिंबेन त्रिविधाभाति सा पुनः ।
प्रकृत्यवच्छिन्नतया पुरुषत्वं पुनश्च मे ॥ ३८.

---

* ब्रह्मत्वाद्यवस्थाः समाधयश्च सरस्वतीरहस्योपनिषदन्ते एतत्क्रमेणैव श्रूयेते.

शुद्धसत्वप्रधानायाम्मायायां बिंबितोह्यजः ।
सत्वप्रधानाप्रकृतिर्मायेति प्रतिपद्यते ॥ ३९.

सा माया स्ववशोपाधिस्सर्वज्ञस्येश्वरस्य हि ।
वश्यमायत्वमेकत्वं सर्वज्ञत्वं च तस्य तु ॥ ४०.

सात्विकत्वा त्समष्ठित्वात्साक्षित्वाज्जगतामपि ।
जगत्कर्तुमकर्तुञ्चाप्यन्यथाकर्तुमीशते ॥ ४१.

यस्सईश्वरइत्युक्तस्सर्वज्ञत्वादिभिर्गुणैः ।
ब्रह्माविष्णुशिवाद्यैश्च नामरूपैस्ससंयुतः ॥ ४२.

शक्तिद्वयं हि मायायाविक्षेपावृतिरूपकं ।
विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत्सृजेत् ॥ ४३.

अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः ।
आवृणोत्यपराशक्तिस्सा संसारस्यकारणम् ॥ ४४.

साक्षिणः पुरतोभाता लिङ्गदेहेन संयुता ।
चितिच्छायासमावेशा जीवस्याद्व्यावहारिकः ॥ ४५.

अस्यजीवत्वमारोपा त्साक्षिण्यप्यवभासते ।
आवृतौतुविनष्टायां भेदे भात्यपयातितत् ॥ ४६.

तथासर्गब्रह्मणोश्च भेदमावृत्यातिष्ठाति ।
याशक्तिस्तद्वशाद्ब्रह्म विकृतत्वेन भासते ॥ ४७.

अत्राप्यावृतिनाशेन विभाति ब्रह्मसर्गयोः ।
भेदस्तयोर्विकारस्या त्सर्गेन ब्रह्मणिकचित् ॥ ४८.

एवमेताः कपिश्रेष्ट सप्तावस्थाश्च नित्यशः ।
विमृशन्नप्रच्यया बुध्या ब्रह्मत्वन्ते च निश्चिनु ॥ ४९.

हित्वा विषममीशादि तदवस्था चतुष्टयं ।
समं लभस्व ब्रह्मत्वाद्यवस्थात्रितयं शुभं ॥ ६०.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीय्यपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
सप्तभूमिकानिरूपणं नाम
॥ सप्तमोऽध्यायः ॥

---

॥ हनूमान् ॥

स्वामिन्दाशरथे येन द्वैतस्फूर्तिरियं मम ।
प्रणश्येद्ब्रूहि तं मुख्यं समाधिं विस्तरेण च ॥ १.

॥ श्रीरामः ॥

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकं ।
आद्यंत्रयं ब्रह्मरूपं जगद्रूपं ततोद्वयम् ॥ २.

उपेक्ष्य नामरूपेद्वे सच्चिदानन्दतत्परः ।
समाधिंसर्वदाकुर्या द्धृदयेवाऽथवा बहिः ॥ ३.

सविकल्पो निर्विकल्पस्समाधि र्द्विविधो हृदि ।
दृश्य शब्दानुविद्धोयं सविकल्पः पुनर्द्विधा ॥ ४.

कामाद्याश्चित्तगाद्दृश्यास्तत्साक्षित्वेन चेतनं ।
ध्यायेद्दृश्यानुविद्धोऽयं समाधिस्सविकल्पकः ॥ ५.

असङ्गस्सच्चिदानन्द स्वप्रभोद्वैतवर्जितः ।
अस्मीतिशब्दाविद्धोयं समाधिस्सविकल्पकः ॥ ६.

स्वानुभूतिरसावेशात् दृश्यशब्दानुपेक्षितुः ।
निर्विकल्पसमाधिस्या न्निवातस्थितदीपवत् ॥ ७.

हृदीव बाह्यदेशेपि यस्मिन्कस्मिंश्च वस्तुनि ।
समाधिराद्यस्सन्मात्रा न्नामरूपपृथक्कृतिः ॥ ८.

स्तब्धीभावो रसास्वादात्त्रिविधः पूर्ववन्मतः ॥
एतैस्समाधिभिष्षड्भि र्नयेत्कालं निरन्तरम् ॥ ९.

यस्तुशब्दानुविद्धस्स्या त्संप्रज्ञाताभिधश्चसः ।
निर्विकल्पस्तथाप्रोक्तोऽसंप्रज्ञाताभिधो महान् ॥ १०.

ब्रह्माकारमनोवृत्तिः प्रवाहोहङ्कृतिं विना ।
संप्रज्ञातसमाधिस्याद्ध्यानाभ्यासप्रकर्षतः ॥ ११.

प्रशान्तवृत्तिकञ्चित्तं परमानन्द दीपकम् ।
असंप्रज्ञातनामायं समाधिर्योगिनांप्रियः ॥ १२.

प्रभाशून्यं मनश्शून्यं बुद्धिशून्यं चिदात्मकं ।
अतद्व्यावृत्तिरूपोसौ समाधिर्मुनिभावितः ॥ १३.

ऊर्ध्वपूर्णमधः पूर्णं मध्यपूर्णं शिवात्मकं ।
साक्षाद्विधिमुखो ह्येष समाधिःपारमार्थिकः ॥ १४.

केचिच्छब्दानुविद्धं तं योगमाहुर्विचक्षणाः ।
निदिध्यासनमित्यन्येत्वभिध्यानं तथाऽपरे ॥ १५.

उपासनमितित्वेके निष्ठामन्ये कपीश्वर ।
प्रत्ययावृत्तिमितरे प्यभ्यासं केचिदुत्तमाः ॥ १६.

अखण्डोहमनन्तोऽहं परिपूर्णोहमद्वयः ।
सच्चिदानन्दरूपोहं ज्योतिषां ज्योतिरस्म्यहं ॥ १७.

अवस्थात्रयहीनोहं तुर्यात्माहं परात्परः ।
देहत्रयविहीनोहं बोधानन्दरसोस्म्यहम् ॥ १८.

भावनात्रयहीनोहं प्रज्ञानघनलक्षणः ।
चिदाकाशस्वरूपोहं जडाकाशादि वर्जितः ॥ १९.

अचञ्चलोस्म्यनाकारोस्म्यविद्यादिविवर्जितः ।
अमलोस्म्यखिलाधारो निराधारोस्मि निर्भयः ॥ २०.

स्वयंप्रकाशरूपोस्मि स्वरूपामृतसागरः ।
निष्प्रपञ्चोस्मि निर्द्वन्द्वः केवलात्मास्मि निर्गुणः ॥ २१.

नित्यशुद्धोस्मि निर्मायो नित्यबुद्धोस्मि निष्कलः ।
नित्यमुक्तोस्मि निष्कामो नित्यसिद्धोस्मि निर्जनः ॥ २२.

अन्तश्शून्यो बहिश्शून्यः शून्यकुम्भ इवांबरे ।
अन्तः पूर्णो बहिः पूर्णः पूर्णकुंभ इवार्णवे ॥ २३.

इत्येवमन्वयं विद्वान्व्यतिरेकपुरस्सरम् ।
स्वस्य ब्रह्मणि कुर्यात्स शब्दविद्धो विमुच्यते ॥ २४.

विकारप्रतिषेधादिं समाधिं विधिलक्षणं ।
कुर्वन्नेकान्ततस्सद्यः सम्यग्दर्शनमाप्नुयात् ॥ २५.

आद्यो दृश्यानुविद्धो हि सुलभो बालचोदितः ।
द्वितीयश्शब्दविद्धस्तु विदुषामपि दुर्लभः ॥ २६.

त्रितीय्यो निर्विकल्पश्च निस्सङ्कल्पाभिधः परः ।
निर्वृत्तिकः पञ्चमश्च षष्ठो निर्वासनाभिधः ॥ २७.

एते समाधयः पुंसां चत्वारोपि सुदुर्लभाः ।
अल्पानन्दनिमग्नत्वात् क्व स्वानन्दाधिकागमः ॥ २८.

बाह्याभ्यन्तरभेदेन षड्विधत्वं प्रचक्षते ।
तन्नसङ्गतमेवस्यात् क्रम विप्रतिपत्तितः ॥ २९.

सङ्क्षेहेणैव ते प्रोक्ताः मारुते षट्समाधयः ।
येष्वेवान्तर्गताः प्रायः सूक्ष्माश्शतसमाधयः ॥ ३०.

सलिले सैन्धवं यद्वत्साम्यं भजाति योगतः ।
तथात्ममनसोरैक्यं समाधिरभिधीयते ॥ ३१.

ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम् ।
निवातदीपवच्चित्तं समाधिरभिधीयते ॥ ३२.

विलाप्यविकृतिं कृत्स्नां प्रकृत्यास्वात्ममात्रया ।
निस्तरङ्गाब्धिवन्निष्ठा समाधिरभिधीयते ॥ ३३.

स्वात्मनोन्यमनालोक्य विकारमणुमात्रकं ।
मेरुवत्सुस्थिरोबोध स्समाधिरभिधीयते ॥ ३४.

अविद्याऽवरणापेतपूर्णचैतन्यनिष्ठया ।
स्वात्मानन्दामृतास्वादस्समाधिराभिधीयते ॥ ३५.

दृग्द्रष्टारौ परित्यज्य दृश्यब्रह्मात्मनास्थितिः ।
निर्विकल्पा स्वसंवेद्या समाधिरभिधीयते ॥ ३६.

द्रष्टृ दर्शन दृश्यानां विकाराणां विलापनात् ।
द्रष्टृदर्शन दृश्याप्तिस्समाधिरभिधीयते ॥ ३७.

नान्यत्पश्यति यत्रात्मा नशृणोति च किञ्चन ।
स्वस्मादन्यन्नजानाति समाधिरभिधीयते ॥ ३८.

सर्ववेदान्त तत्वार्थवेदिनां महतामपि ।
समाध्यभ्यासहीनानां नकैवल्यं कदाचन ॥ ३९.

समाधिरहितामर्त्या स्तत्वार्थज्ञानिमानिनः ।
जगत्प्रतारणे दक्षा न तेषां परमागतिः ॥ ४०.

भगीरथाद्यः पूर्वे सर्वे राजर्षयोऽपरे ।
ब्रह्मर्षयश्शुकाद्याश्च समाधिममुमाशृताः ॥ ४१.

इन्द्राद्योऽष्टदिक्पाला ब्रह्माविष्णुमहेश्वराः ।
तत्तदंशाश्च मुख्याये समाधिममुमाशृताः ॥ ४२.

ब्राह्मणाः क्षत्रियावैश्या श्शूद्रास्तादितरेपि वा ।
येकेचन पुरामुक्ता स्समाधिममुमाशृताः ॥ ४३.

बालोन्मत्तापिशाचादि चर्यावन्तो यतीश्वराः ।
प्रेताजगरवच्चान्ये समाधिममुमाशृताः ॥ ४४.

समाधितत्परा नित्यं लभन्ते परमं सुखं ।
समाधिविमुखा नित्यं लभन्ते दुःखसञ्चयम् ॥ ४५.

समाधिर्विदुषां स्नानं समाधिर्विदुषां जपः ।
समाधिर्विदुषां यज्ञः समाधिर्विदुषां तपः ॥ ४६.

तस्मात्वमादरेणैव समाधिं च समाधिना ।
आशृत्य मारुते शान्तो निष्कामश्च सदा भव ॥ ४७.

समाधिलीनचित्तस्य कोऽनन्याधिपतेः प्रभोः ।
विधिरस्ति निषेधोवा ततस्त्वं निर्भयोभव ॥ ४८.

लब्ध्वा जलूकान्यायेन समाधिं निर्विकल्पकं ।
सर्वाण्याश्रमकर्माणि भक्त्यादीनि च संत्यज ॥ ४९.

त्यक्त्वा कर्माण्यशास्त्रेण समाधौचेत्प्रवर्तसे ।
अधःपतनमेवस्या न्निराधारस्य मारुते ॥ ५०.

निर्विकल्पसमाध्येकनिष्ठस्य वरयोगिनः ।
सुरेन्द्रेण प्रजेशेन मयावा किं कपीश्वर ॥ ५१.

अकर्मा*त्मसमाधिस्ते कर्तृत्वं यस्तु शङ्कते ।
तस्य कर्तृत्वसंसारा न्नमुक्तिः कल्पकोटिभिः ॥ ९२.

समाध्यानन्दहीनस्य परमात्मविदोपि मे ।
लोकरक्षणवृत्या हि परन्दुःखमभूत्कपे ॥ ९३.

अतस्समाधिहीनस्य सर्वशास्त्रविदोपि वा ।
नूनं दुस्तरएवायं भवदुःखपयोनिधिः ॥ ९४.

तस्मात्समस्तश्रुतिशीर्षबोधितं रुद्रादिभिश्शिष्टतमैरनुष्ठितं ।
संसारदुःखौघपयोधिशोषणं समाधिमेकान्तगतस्समाचर ॥ ९५.

पिधाय सर्वाण्यपि चेन्द्रियाण्यलं समाधिमत्राभिनयन्ति केचन ।
बहिर्मनस्त्वा न्न मनःप्रतिष्ठितिस्तेषां यथापूर्वभवप्रदर्शनात् ॥ ९६.

अतस्समाधिं कुरु शत्रुमर्दन प्रणष्टकामादिगुणोत्र निश्चलं ।
तेनैव लुप्तेषु समस्तकर्मसु क्वाचिच्चहानि र्नकदापि काचन ॥ ९७.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीयपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
समाधि निरूपणं नाम
॥ अष्टमोऽध्यायः ॥

---

॥ हनूमान् ॥

श्रीराम परमाचार्य संशयो मे महानभूत् ।
समाधिरेव विदुषां स्नानादीति यदीरितं ॥ १.

स्नानाद्याश्रमधर्माणां नित्यानां विहितत्वतः ।
लोपे हि प्रत्यवायस्या द्विदुषा मपि देहिनां ॥ २.

---

* अकर्त्ता इति पाठान्तरम्.

नैमित्तिकत्वाभावेन काम्येतरतयापि च ।
तेषां न कार्यं लुप्तानां प्रायश्चित्तं कथं चन ॥ ३.

विहिताकरणोत्थस्य दोषस्य यदि निर्ह्रुतिः ।
ब्रह्महत्यादिदोषाणां फलशास्त्रं च निष्फलं ॥ ४.

अकर्मणां फलाभावे कर्मणां च विकर्मणां ।
अपूर्वोत्तरजन्मित्वात् स्वेच्छाचारो नृणां भवेत् ॥ ५.

सन्यासिनां तु शास्त्रोक्तवर्त्मनैवास्त्यकर्मिता ।
गृहिणामप्यकर्मित्वे न शास्त्रं प्रतिभाति मे ॥ ६.

अनारंभो गृहस्थश्च कार्यवांश्चैव भिक्षुकः ।
उभौ तौ नविराजेते विपरीतेन वर्त्मना ॥ ७.

इत्येवं प्रबलं श्रौतं स्मार्तं च प्रथितं वचः ।
श्रुतं मयैव शिष्टेभ्यो नान्यथारघुनायक ॥ ८.

॥ श्रीरामः ॥

अहो बुद्धिमतां श्रेष्ठ भवता साधु शंकितं ।
अत्र मुह्यन्ति सर्वेपि विद्वांसः पवनात्मज ॥ ९.

वैफल्यं न क्वचित्तेषां कर्माकर्मविकर्मणां ।
अन्यत्र विनियुक्तत्वाच्छ्रुत्या तदरिबन्धुषु ॥ १०.

समाधिपारवश्येन लुप्तत्वान्नित्यकर्मणां ।
नप्रत्यवायगन्धोपि विदुषां मुक्तजन्मनां ॥ ११.

अभिमानविहीनानां समाध्यासक्तचेतसां ।
स्वेच्छाचारो न षण्डस्य वेश्यालौल्यमिवोद्भवेत् ॥ १२.

श्रुत्यादिष्वभ्यनुज्ञेति स्वेच्छाचारस्य वर्तते ।
मन्यन्ते केचिदल्पज्ञा अमत्वैवार्थवादतां ॥ १३.
समाधे र्व्युत्थितस्यापि विदुषो लुप्तकर्मणः ।
आरंभाद्वैपरीत्यन्न तत्कालोचितकर्मणां ॥ १४.
असमाहितचित्तोयस्त्वनारंभेण कर्मणां ।
गृहस्थाश्रमसंभ्रष्ट स्समूर्खो न विराजते ॥ १५.
शिष्टास्तमेवाभिप्रेत्य जगदुस्तत्ववादिनः ।
तस्मान्मदुक्तेष्वर्थेषु माशङ्किष्ठाः कदाचन ॥ १६.
कर्तृनाशे यतः कर्मनाशोत्राभ्युपगम्यते ।
कर्तुस्समाधौनष्टत्वा न्नतदा कर्मचोदना ॥ १७.
गृहिणो यतितुल्यत्वादपि तस्यामवस्थितौ ।
सर्वकर्मविनिर्मुक्तस्स्वात्मारामान्नकर्मिता ॥ १८.
तुर्याश्रमं विनास्याच्चे त्समाधिश्चोत्थितिं*विना ।
सर्वकर्मपरित्यागेप्यस्य हानि र्नकाचन ॥ १९.
तुर्याश्रमेपि कर्माणि श्रूयन्तइतिचेच्छृणु ।
आदावन्तेच सन्त्यागो मध्येतूक्तान्यशक्तितः ॥ २०.
तस्मान्नकर्मसाहित्यं मुख्यं सन्यासिनांमतं ।
गृहस्थैः प्राथ्यमानत्वा द्दण्डादि ग्रहणस्य च ॥ २१.
असमाहितचित्तोपि ब्रह्मचारी गृही वनी ।
यतिश्चात्मविचारेषु कुर्युःकर्माणि संग्रहात् ॥ २२.
कर्मणां संग्रहो नाम नमानसिकतोच्यते ।
मन्त्रावृत्तिः क्रियाल्पत्वमापन्नानां यथाविधिः ॥ २३.

* समाधिर्व्युत्थितिं इति पाठान्तरम्.

एकान्तमननात्तीव्रा ब्रह्मैकविषयात्स्वयं ।
यस्येन्द्रियाणि सर्वाणि भान्ति संलीनवृत्तिवत् ॥ २४.

तस्यापि कर्मलोपेषु प्रत्यवायो न विद्यते ।
किमु वक्तव्यमन्यस्य समाधौ लीनचेतसः ॥ २५.

॥ हनूमान् ॥

एवं यदि रघुश्रेष्ठ सर्वेषां प्राणिनां भृशं ।
सुप्तौ प्रलीनचित्तत्वा त्कर्मलोपैर्नदूषणम् ॥ २६.

महतां दर्शने प्राप्ते समस्तानियमैरलं ।
इत्यस्य चार्थवादत्वं दृश्यते सर्वसंमतम् ॥ २७.

॥ श्रीरामः ॥

सुप्तौ सर्वविकाराणां सत्वाद्बीजात्मना भृशं ।
प्रलीनचित्तता नास्ति सामान्यात्तूपचर्यते ॥ २८.

अतस्सुषुप्तौ लुप्तेषु कर्मसु प्रत्यवायभाक् ।
प्रायश्चित्तानि कुर्यात्स्वह्यनात्मज्ञो यथाविधि ॥ २९.

महतान्दर्शनञ्चात्र ब्रह्मश्रवणकारणं ।
नार्थवादपदं गच्छेत् तदन्यत्सर्वसम्मतम् ॥ ३०.

निन्दा नियमशास्त्रस्य बलीयस्त्वान्नकेनचित् ।
कार्या ब्रह्मात्मविज्ञानविहीनेन कदाचन ॥ ३१.

विदुषामपि संसिद्धं व्यवहारदशासु यत् ।
कोवा नियमशास्त्रं तद्बाधयेद्बुद्धिपूर्वकम् ॥ ३२.

विद्योत्कर्षबलादत्र प्रातिलोम्यं यदुच्यते ।
विधिशास्त्रानुरोध्येतन्मन्तव्यं नान्यथा कपे ॥ ३३.

वर्णाश्रमव्यवस्थेयं पूर्वैः पूर्वतरैः कृता ।
सर्वलोकेश्वरेणापि नदूष्या देहिना स्वयम् ॥ ३४.
स्वस्ववर्णाश्रमाचारैः प्रीणयन् परमेश्वरं ।
क्रमेण यातिपुरुषो मामकं पदमुत्तमम् ॥ ३५.
वर्णाश्रमाचारहीनं वेदान्ता नपुनन्ति हि ।
महान्तो गुरवश्चापि शिष्यं गृह्णन्ति नैव तम् ॥ ३६.
विदुषोपि सुखं भूरि वर्णाश्रमनिबन्धने ।
स्वेच्छाचाराद्यहेतुत्वात्प्रभवेन्नात्र संशयः ॥ ३७.
वर्णाश्रमाचारबन्धो नबन्धो मोक्षकांक्षिणां ।
भयावहोन्यधर्माणामाचारो बन्धइष्यते ॥ ३८.
यस्य वर्णाश्रमाचारे श्रद्धातीव प्रवर्तते* ।
सकर्मिप्रवरोऽविद्वानपि विद्वत्वमाप्नुयात् ॥ ३९.
भर्त्रधीना यथा योषित्परमंसुखमश्नुते ।
स्वैरिणीच परन्दुःखमुभयोरपि लोकयोः ॥ ४०.
एवं वर्णाश्रमाधीन ऐहिकामुष्मिकं सुखं ।
प्राप्नुयादितरो दुःखं नात्र सन्देहकारणम् ॥ ४१.
चण्डालस्यापि विप्रत्वं प्रायश्चित्तेन संभवेत् ।
वर्णाश्रमपरिभ्रष्टः प्रायश्चित्तीनकश्चन ॥ ४२
भक्तिज्ञानविरक्त्यादि पादपस्याभवन्नमी ।
वर्णाश्रमसमाचारा यन्मूलानि नतांस्त्यजेत् ॥ ४३.
निर्मूलः पादपोम्बोभिः संसिक्तोपि यथाफलं ।
जनयेन्नाश्रमाचारहीनो भक्त्यादिराश्रितैः ॥ ४४.

---

* प्रवर्धते इति पाठान्तरम्.

नैतेन सर्ववेदान्तप्रसिद्धस्यास्ति दूषणम् ।
अतिवर्णाश्रमित्वस्य स्वान्याचारविवर्जनात् ॥ ४५.

स्वाचारानितराचारानपि हित्वानिरन्तरं ।
निश्चेष्टो योऽभवद्योगी सोतिवर्णाश्रमी भवेत् ॥ ४६.

यस्स्वाचारानिह त्यक्त्वा पराचारान् समाश्रयेत् ।
सस्वेच्छाचारनिरतो भ्रष्टवर्णाश्रमीमतः* ॥ ४७.

शान्ति दांत्यादयोधर्माः परस्यैव यते श्श्रुताः ।
तथापि नोत्तमत्वात्ते परेषां स्युर्भयावहाः ॥ ४८.

अग्निहोत्रादिकर्माणि शूद्रस्यापि तथेति चेत् ।
नाभ्यन्तरेणबाह्यस्य सादृश्यानुपपत्तितः ॥ ४९.

अरूपनष्टचित्तासुर्भवान्यावन्महाकपे ।
विदेहमुक्तिर्नप्राप्तस्तावद्वर्णाश्रमीभव ॥ ५०.

लब्ध्वादेहान् वातजेच्छानुरूपान् श्रौतस्मार्ताशेषधर्मांश्चनित्यान् ।
कृत्वा नित्यं†सङ्गहीनोर्पयाशु त्वामेषोहं मोक्षयिष्यामिशोकात् ॥

औदासीन्यं माकृथाः किंचिदत्र स्वाचारेषु त्वं मुमुक्षुर्यतोसि ।
यत्स्वाराज्यंस्वाश्रमाचारमूलं व्यग्रो नित्यं तेषुनिष्ठां कुरुष्व ॥ ५२.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीयपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपानिषत्सु
वर्णाश्रमव्यवस्थापनं नाम
॥ नवमोऽध्यायः ॥

---

* भवेत् इति पाठान्तरम्.
† मद्यं इति पाठान्तरम्.

॥ हनूमान् ॥

नमस्ते जानकीकान्त भक्तवत्सल राघव ।
क्षन्तव्यो मेऽपराधोयं यन्मयाऽयासितोस्यहो ॥ १.

श्रोतव्यांशाः पुनश्चात्र वर्तन्ते बहवो मम ।
तथापि पश्चाच्छ्रोष्यामि प्रतीक्ष्यावसरं क्रमात् ॥ २.

॥ श्रीरामः ॥

कपे त्वमिङ्गितज्ञोपि मुग्धएवासि सांप्रतं ।
एवं ब्रवीषि मां तत्वकथनात्युत्सुकं यतः ॥ ३.

मिथ्याव्याहारजायास लेशहीनस्य मेऽधुना ।
वाग्वृत्तयः प्रवर्द्धन्ते स्वानन्दामृतपूरिताः ॥ ४.

तस्मात्त्वं मारुतेऽव्यग्रं परतत्वावबोधने ।
मामशेषान्यथाकामं पृष्टव्यान् पृच्छ निर्भयम् ॥ ५.

॥ हनूमान् ॥

भगवन् सञ्चितागामि प्रारब्धाख्यानि च प्रभो ।
कर्माणि त्रिविधान्याहु र्महान्तो रघुनन्दन ॥ ६.

तेषु केचिद्बुधा बोधा न्नाशं सञ्चितकर्मणां ।
आहुर्भोगंविनैवाशु सुखदुःखात्मकं फलं ॥ ७.

आगामि पुण्यपापानां पश्चादकरणात्परं ।
अश्लेषमेव विद्वद्भिः प्राहुर्वेदान्तपारगाः ॥ ८.

भोगंविना न नाशोस्ति विद्वत्प्रारब्धकर्मणां ।
हस्तमुक्तेषुवत्प्रोचुरिति तत्वविचक्षणाः ॥ ९.

अन्येतु भोगादाद्यानां द्वितीयानां ततःपरं ।
तृतीयानां विनाशंचाश्लेषं भोगं विनाक्षयम् ॥ १०.

एवं विद्वत्तमप्रोक्तपक्षयो रुभयोरपि ।
एकं मुख्यं विनिश्चित्य प्रसीद मम राघव ॥ ११.

॥ श्रीरामः ॥

साधु पृष्टं महाप्राज्ञ हनूमन् प्रश्नकोविद ।
अवश्यज्ञेयएवायं प्रश्नो* विद्वत्तमैरपि ॥ १२.

गौणो यः पक्षयोराद्यस्त्वया विद्वन्मुखाच्छ्रुतः ।
द्वितीयो यस्तु मुख्यस्याद्विद्वत्तममुखाच्छ्रुतः ॥ १३.

जीवन्मुक्त्यवधिस्तत्वविचारो येषु विद्यते ।
तेषांमतं हि पूर्वोक्तं मन्दप्रीतिकरं भवेत् ॥ १४.

विदेहमुक्तिपर्यन्तविचारो येषु विद्यते ।
पश्चादुक्तं मतं तेषा मुत्तमप्रीतिदं भवेत् ॥ १५.

आद्ये विरोधाबहवस्सन्ति सम्यङ्ज्ञनिरूपिते ।
सञ्चितेषु ह्यभुक्तेषु प्रबोधोत्पत्यसंभवः ॥ १६.

आदावुत्पद्यमानस्य ज्ञानस्यावीर्यवत्तया ।
शक्तिर्नाशयितुं नस्या द्वीर्यवत्सञ्चितवृजम् ॥ १७.

भोगेनैव विनाशश्चेत्प्रायश्चित्तवचोवृथा ।
इतिचेन्नोपपापानां प्रायश्चित्तक्षायित्वतः ॥ १८.

महतां ब्रह्महत्यादिपापानामस्ति तद्वचः ।
इतिचेन्नार्थवादत्वा त्फलशब्दोन्यथावृथा ॥ १९.

---

*व्यर्थो इति पाठान्तरम्.

अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभं ।
नाभुक्तं क्षीय्यते कर्म कल्पकोटिशतैरपि ॥ २०.

इत्येवमादिस्मरणं पूर्वपक्षे विरुध्यते ।
ब्रह्मेश्वरगुरूणां च वैषम्यं संप्रसज्यते ॥ २१.

फलशब्दोऽर्थवानास्ता मन्त्रायश्चित्तिषु स्वयं ।
इतिचेद्बोधनाश्यत्वं प्रसिद्धं कर्मणांवृथा ॥ २२.

यथैषीकातूलमग्नाविति श्रुत्याद्यकर्मणां ।
विषयत्वे कथं तत्र भोगवार्तेति चेच्छृणु ॥ २३.

उपपापानि बोधाग्निर्भस्मसात्कुरुतेऽथवा ।
प्रारब्धानीति विद्धित्वं नान्यथा कपिपुङ्गव ॥ २४.

महापापानि पुण्यानि सकामानि च भोगतः ।
यदा नश्यन्त्यशेषाणि ताद्रूप्यात्सञ्चितानि हि ॥ २५.

अत्रैव तत्कृते देहे निष्कामानीतराणि च ।
पुण्यानि श्रवणाद्यैस्तत् ज्ञानमुत्पादयन्ति वै ॥ २६.

प्रबलैः प्रतिबन्धानि पुण्यपापानि जाग्रति ।
दुर्बलानि फलं पश्चात्स्वप्ने वा ददति स्वयम् ॥ २७.

यस्त्ववस्थात्रयं हित्वा स्वात्मारामोऽनिशं भवेत् ।
तद्ज्ञानस्य बलीयस्त्वात्कर्माणि विफलानि वै ॥ २८.

प्रारब्धं सिध्यति तदा यदा देहात्मना स्थितिः ।
देहात्मभावो नैवेष्टः प्रारब्धं त्यज्यतामतः ॥ २९.

सञ्चितानि बलिष्ठानि प्रारब्धान्यबलानि तु ।
आद्यत्वेनान्तिमत्वेन तदसत्पूर्वसंमतम् ॥ ३०.

॥ दशमोऽध्यायः ॥

॥ हनूमान् ॥

भगवन् रघुशार्दूल विनियोगस्तु कर्मणां ।
साधुरेव त्वया प्रोक्तस्तथाप्यन्योऽस्ति संशयः ॥ ३१.

सुहृद्द्विषन्तौ विदुषः पुण्यपापेत्र गच्छतः ।
इति श्रौतोयमर्थस्तु विरुद्धः पक्षयोर्द्वयोः ॥ ३२.

भोगतो ज्ञानतश्चैषां सञ्चितारब्धकर्मणां ।
विनाशे कथमन्यत्र विनियोगोऽरिमित्रयोः ॥ ३३.

॥ श्रीरामः ॥

लोकसंग्रहबुध्यैव सम्यग्ज्ञानोदयात्पुरा ।
पश्चाच्च क्रियमाणानि यानि नैमित्तिकानि तु ॥ ३४.

तान्यात्माऽनुपभुक्तत्वादनष्टत्वाच्च बोधतः ।
पुण्यकर्माणिसुहृदः प्रयान्ति कपिपुङ्गव ॥ ३५.

लोकसंग्रहधीहीनैः विद्वद्भिरकृतानि च ।
नैमित्तिकानि कर्माणि यानि काम्यानि चाभवन् ॥ ३६.

तानि चानुपभुक्त्वा दनष्टत्वाच्च बोधतः ।
पापकर्माण्यसुहृदः तेषां यान्ति मरुत्सुत ॥ ३७.

नैतानि पुण्यपापानि सञ्चितान्तर्गतानि च ।
नारब्धान्तर्गतानिस्यु र्नागामीति पृथक्त्वतः ॥ ३८.

परोक्षज्ञानिनश्चैते पुण्यपापेऽरिमित्रयोः ।
अर्धमार्गे प्रयाणेच प्रयातइति गम्यते ॥ ३९.

एताभ्यां साध्वसाधुभ्यां कर्मभ्यां परमात्मवित् ।
नलिप्यते परार्थत्वात्पद्मपत्रमिवांभसा ॥ ४०.

प्राक्प्रबोधात्कृतान्यत्र नित्यकर्माण्यथापि च ।
प्रबोधस्य च मोक्षस्य सहकारीणि मारुते ॥ ४१.

॥ हनूमान् ॥

प्रबोधसहकारित्वमुचितं नित्यकर्मणां ।
न मोक्षसहकारित्वं श्रूयते राघवः क्वचित् ॥ ४२.

काष्ठदाहेन्नपाकेच स्वतन्त्रोग्निर्यथा भवेत् ।
कर्मक्षयेपि मुक्तौच प्रबोधोहि तथाभवेत् ॥ ४३.

बोधस्सप्रतिबन्धश्चेत्कर्मापेक्षोपपद्यते ।
अत्र निष्प्रतिबन्धस्य तदपेक्षा कथं विभो ॥ ४४.

नकिञ्चिदपि कर्तव्यं सम्यग्ज्ञानोदयात्परं ।
इति वेदान्तसिद्धार्थे व्यभिचारः कथं भवेत् ॥ ४५.

॥ श्रीरामः ॥

अरूपनाशासंसिद्धे स्सम्यग्ज्ञानेन्द्रियाण्यनु ।
प्रवर्तन्ते बहिस्स्वार्थेष्वञ्जनासुत सर्वतः ॥ ४६.

स्वेच्छाविहारासिध्यर्थं विद्वांस्तानीन्द्रियाण्यलं ।
वर्णाश्रमोचितै र्धर्मकामार्थैरुपलाळयेत् ॥ ४७.

अरूपनाशो नैतेषां यावज्जातस्समाधिभिः ।
तावन्नित्यानि कर्माणि प्रबोधोपेक्षते भृशं ॥ ४८.

अतो न किञ्चित्कर्तव्यं नित्यकर्मेतरद्बुधैः ।
इति त्वं विद्धि वेदान्तवाणी मव्यभिचारिणीं ॥ ४९.

इन्द्रियाणां विचरतां विषयेषु स्वभावतः ।
लाळनेह्युत्तमं श्रेयः स्वाश्रमोचितकर्मभिः ॥ ५०.

कायिकं वाचिकं कर्म यदि मानसिकं क्रमात् ।
संसृज्येत प्रबोधेन विदुषस्सात्वलङ्क्रिया ॥ ९१.

अरूपनष्टचित्तासु करणस्साविदुत्तमः ।
आभ्यां विधिनिषेधाभ्यां न बाध्येत कदाचन ॥ ९२.

स्वल्पाप्यारब्धभोगेच्छा वर्तते विदुषो यादि ।
अवश्यं स्वाश्रमाचार इति विद्धि विचक्षण ॥ ९३.

अवधार्य मदुक्तार्थान्मनस्येवं पुनश्च मां ।
पृष्टव्यान् परिपृच्छत्वं माशङ्किष्ठाः कपीश्वर ॥ ९४.

इति श्री तत्वसारायण उपासनाकाण्डस्य द्वितीयपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
कमविभाग योगो नाम
॥ दशमोऽध्यायः ॥

---

॥ हनूमान् ॥

गुरूणां च गुरो श्रीमन् रामचन्द्र दयानिधे ।
किं वक्ष्ये भक्तवात्सल्यं तव वाचामगोचरम् ॥ १.

यन्मामपारसंसारसागरे मग्नमीदृशं ।
उत्तारयितु मत्यन्तं बद्धश्रद्धोऽसि सादरम् ॥ २.

सत्वं रजस्तमश्चेति प्रसिद्धं हि गुणत्रयं ।
कर्मिणस्सान्ति भक्ताश्च ज्ञानिनो योगिनस्तथा ॥ ३.

तेषां चतुर्णां सत्वादिगुणै र्भेदेन संस्थितिं ।
फलञ्च विस्तरेणैव मम ब्रूहि रघूत्तम ॥ ४.

॥ श्रीरामः ॥

सात्विकाः कर्मिणो लोके श्रुतिस्मृत्युक्तकर्मभिः ।
नित्यैरसङ्गा मां विष्णुं प्रीणयन्ति जनार्दनम् ॥ ५.
ते क्रमेणैव संशुद्धचित्ता वेदान्तवर्त्मना ।
मामेष्यन्ति चिदानन्दं परमात्मानमव्ययम् ॥ ६.
अन्येतु राजसाःस्वर्गकामाश्श्रौतानि कार्मिणः ।
इन्द्रादिदेवताप्रीत्यै यज्ञादीन्याचरन्ति वै ॥ ७.
ते भुक्त्वा भोगमतुलं स्वर्गलोके सुरैस्सह ।
क्षीणेपुण्यइमं लोकमावर्तन्ते पुनर्ध्रुवम् ॥ ८.
येचान्ये तामसाः काम्यकर्मैकनिरता भृशं ।
कुटुम्बपोषणे सक्ताः वित्तैः कर्मार्जितैस्सदा ॥ ९.
ते यान्ति नरकं घोरं चित्रगुप्तादिरक्षितं ।
ततः प्रत्यवरोहन्ति श्वादियोनिमधोमुखाः ॥ १०.
येचान्ये सात्विकाभक्ताः शङ्खचक्रगदाधरं ।
ध्यानादिभिर्भजन्ते मां निष्कामाश्श्रुतिघोषितैः ॥ ११.
मल्लोकं पार्षदैर्नीताः मत्तो लब्धात्मवेदनाः ।
मयासहैव ते यान्ति मम तत्परमं पदम् ॥ १२.
येऽन्ये च राजसाभक्ता बहुशिष्यसमान्विताः ।
भजन्ते मां हरिं बाह्यैः प्रतीकेष्वर्चनादिभिः ॥ १३.
मत्सालोक्यं च ते गत्वा भोगान् ब्रह्मादिदुर्लभान् ।
भुक्त्वा पुनश्च जायन्ते विशुद्धब्राह्मणान्वये ॥ १४.
येचान्ये तामसाभक्ताः भक्तवेषैस्समन्विताः ।
श्रौताचारविहीनाश्च वित्ताद्यर्थं भजन्ति माम् ॥ १५.

तेचात्र पामरैस्तुल्या गत्वैव नरकं पुनः ।
श्वादिजन्म प्रपद्यन्ते ह्यन्तःप्रच्छन्नपापतः ॥ १६.

ज्ञानिनस्सात्विका येस्युर्वैराग्यादिविभूषिताः ।
ब्रह्मैक्यमनने निष्ठास्स्वाश्रमाचारभासुराः ॥ १७.

यतयो गृहिणो वाऽन्ये ते मल्लोकं सुदुर्लभं ।
प्राप्य चान्ते मयासाकं यान्ति तन्मत्पदं परम् ॥ १८.

ज्ञानिनो राजसा येऽन्ये संसारासक्तचेतसः ।
शिष्यैः परिवृता श्श्रौतान् स्मरन्त्यर्थान्कदाचन ॥ १९.

तेऽपि भुक्त्वा महाभोगान् मल्लोके पुनरत्र च ।
जातास्सद्यो विमुच्यन्ते पूर्ववासनयान्विताः ॥ २०.

ज्ञानिनस्तामसा येऽन्ये विषयासक्तमानसाः ।
शूद्रादीनां च वेदार्थं कथयन्त्यर्थलब्धये ॥ २१.

तेच भुक्त्वा महाघोरं रौरवं नरकं ततः ।
श्वादिजन्म प्रपद्यन्ते वेदसन्दूषणाद्भृशम् ॥ २२.

योगिनस्सात्विका येस्युः निदिध्यासनतत्पराः ।
अपरोक्षात्मलाभेन प्रसन्ना विगतस्पृहाः ॥ २३.

प्रारब्धदेहपाते ते विनोत्क्रान्त्यादिकं मम ।
सर्ववेदान्तसंसिद्धं यान्ति तत्परमं पदम् ॥ २४.

योगिनो राजसा येऽन्ये सदसि ध्याननिष्ठया ।
मनोनाशादिहीनाश्च ध्येयव्याकुलमानसाः ॥ २५.

अनुभूयोत्कटं दुःखमिह प्रारब्धजं च ते ।
देहादमुष्मादुत्क्रम्य यान्ति मे परमं पदम् ॥ २६.

योगिनस्तामसा येऽन्ये ब्रह्मध्यानेष्वनादराः ।
अभानावरणाक्रान्ता अणिमादिरताशयाः* ॥ २७.

दुराचाराप्रसक्तेस्ते मल्लोके परमं सुखं ।
अनुभूय ततो भूमौ मां यान्त्येकेन जन्मना ॥ २८.

कार्यकारणभेदेन विकृताविकृतात्मना ।
विज्ञेयाष्षड्विधाप्राज्ञैस्त्रयस्सत्वादयो गुणाः ॥ २९.

एतेषु कार्यात्रिगुणसंपन्ना योगिनस्त्रयः ।
कारणात्रिगुणोपेता जीवन्मुक्तास्त्रयः क्रमात् ॥ ३०.

येचोक्ताः कर्मिणो भक्ता ज्ञानिनो नवमारुते ।
त्रिवृत्कृतगुणोपेताः ते विज्ञेया विलक्षणाः ॥ ३१.

यथा त्रिवृत्कृता विश्वतैजसप्राज्ञसंज्ञिकाः ।
जीवा नवविधाः प्रोक्ता अविद्याकार्यरूपिणः ॥ ३२.

यथा च ब्रह्मविष्णवीशाः प्रसिद्धास्ते त्रिवृत्कृताः ।
ईशा नवविधाः प्रोक्ता मायाकार्यैकरूपिणः ॥ ३३.

तथागुणैः सत्वरजस्तमोभिरव्यैस्त्रिवृत्कृतैः ।
स्वकार्यरूपैस्संयुक्ताः कर्म्याद्याश्च नवेरिताः ॥ ३४.

अजामन्त्रोदिताशक्ति श्चिन्मयीप्रकृतिस्तथा ।
त्रिपात्तत्वामृतञ्चोक्तमत्र बीजगुणत्रयम् ॥ ३५.

कैश्चिद्गुणत्रयस्यास्य मायाकार्यत्वमुच्यते ।
अविद्याकार्यताचैत त्तद्बीजत्वादसङ्गतम् ॥ ३६.

कार्यकारणरूपेभ्यः षड्विधेभ्य इहेतरे ।
त्रिवृत्कृतागुणाः प्रोक्तास्ते हेयास्तु मुमुक्षुभिः ॥ ३७.

---

* स्वाश्रमाचाररतपराः इति पाठान्तरम्.

गुणसामान्यबुध्यात्राऽलब्धकार्यगुणाअपि ।
उदासते बीजगुणानपिते ज्ञानवञ्चकाः ॥ ३८.
सच्चिदानन्दरूपांस्तान्मद्गुणांस्त्रींश्च मारुते ।
ब्रह्मामरेशप्रमुखा अपि नित्यमुपासते ॥ ३९.
तस्मात्वमादरेणैव मद्वाक्येषु कपीश्वर ।
उपास्व जीवन्मुक्त्यर्थं कारणं मद्गुणत्रयम् ॥ ४०.
गुणा इमेस्मिन्गुणशब्दभाजोप्यन्यत्र सत्येऽगुणशब्दभाजः ।
अन्यात्वितो निष्प्रतियोगिकन्तद्गुणागुणाख्यापददूरमासीत् ॥ ४१.
तस्माद्गुणैरेव गुणान्विहाय सुमेरुवत्सुस्थिरबोधनिष्ठः ।
उपाश्रय त्वं त्रिगुणान् क्रमेण समाधिभिर्मे भृशदग्धलङ्कः ॥ ४२.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीयपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
गुणत्रयविभागयोगो नाम
॥ एकादशोऽध्यायः ॥

---

॥ हनूमान् ॥

रामचन्द्र दयासिन्धो विश्वरूपं तवाद्भुतं ।
श्रोतुमिच्छामि दासोऽहं जानकीप्राणवल्लभ ॥ १.

॥ श्रीरामः ॥

हनूमंछ्रुणु वक्ष्यामि विश्वरूपं ममाद्भुतं ।
दर्शयिष्यामि भीमाय यत्त्वमेव कपीश्वर ॥ २.
वाचामगोचरमथापि च मत्स्वरूपं
प्रेम्णा वशीकृतमतिस्त्वयि तत्प्रवक्ष्ये ।

मायाविलासपरिकल्पितचित्रगात्रं
श्रोतव्यमेव भवता ननु गच्छ भीतिम् ॥ ३.

॥ हनूमान् ॥

स्वामिन् सकृच्छ्रवणमात्रसमस्तभीति-
ध्वंसप्रवीणबहुमङ्गलदिव्यगात्रे ।
ते सर्वदाप्यभयवादिमुखारविन्दा-
दद्य श्रुते मम कथं भयमुद्भवेद्वा ॥ ४.

॥ श्रीरामः ॥

मैवं कपे वद विधीन्द्रमुखास्सुरास्ते
शृण्वन्तएव भयमाप्नुयुरप्यहो यत् ।
स्मृत्वा ममापि पुलकाततएषदेहः
संप्रत्यवाप्स्यति भवानपि तेन मूर्च्छाम् ॥ ५.

यत्सर्वतो विपुलदुर्ग्रहपाणिपादं
यत्सर्वतोऽक्षिमुखनासिकमस्तकं च ।
यत्सर्वतश्श्रवणकण्ठभुजोरुनाभि
जानूरुतद्बृहदखण्डवपुस्स्मर त्वम् ॥ ६.

तन्नासिकाबिलमवाप्य चतुर्दशैता-
न्युच्छ्वासतो मशकवद्भुवनानि तस्मात् ।
निश्वासतश्च विरलानि पुनःपुनर्वै
निर्यान्तिमर्कटबहिः क्वचिदेव देहे ॥ ७.

ब्रह्माण्डकोट्यइतस्ततएव केशे
व्याप्ते क्वचिन्मम तु संशयितास्ति भावाः ।

लग्नाभवन्ति परमाणुसमानरूपा-
श्शाखोपशाखिवटशाखिनि बीजवत्ताः ॥ ८.

स्थूलानि यत्तद्वदनानि कानिचि-
द्दीर्घाणि ह्रस्वाणुतराणि कानिचित् ।
पादादयश्चैवमतः प्रसादितैः
तद्दर्शनीयं भुवि धीरमानसैः ॥ ९.

यस्यैव गण्डूषपयांसि सागरा-
स्सप्तापि नासामलवत्सरिद्वराः ।
मेर्वादयः कर्णमलानि पर्वताः
शक्तः पुमान् कोस्त्यभयं तदीक्षणे ॥ १०.

खद्योतवद्यत्र भवन्ति भास्करा
माध्यन्दिनाअप्यतिदुर्विभावनाः ।
घोराट्टहासत्त्रुटिताण्डभित्तिकं
वक्ष्ये कथं तन्मम रूपवैभवम् ॥ ११.

दंष्ट्राकराळाननपुञ्जदर्शना-
द्भीतैः कृतान्तैर्बहुभिः पलायितं ।
गन्तव्यदेशान्तरलेशहानितो
यत्रैव संमूर्च्छितमङ्गते स्वयम् ॥ १२.

इन्द्राश्च यद्भ्रमसहस्रलोचनाः
पतन्ति यत्रैव रुदन्ति चाधिकं ।
स्वेषां विनिन्दन्ति च निर्निमेषतां
भवन्त्यचेष्टा बत मुग्धचेतसः ॥ १३.

यन्नाभिपद्मेषु बृहत्तमा अपि
स्थिरा रजोवद्बहवश्चतुर्मुखाः ।
चण्डाट्टहासत्रुटिता लुठन्त्यहो
मृगाः पवेः पर्वतकन्दरेष्विव ॥ १४.

संवर्तकालोद्भटपावका भृशं
दग्धा अरूपं गमिता यतोऽचिरात् ।
अमध्यमाद्यन्तविहीनमद्भुतं
विचिन्तय त्वं पवनात्मज स्वतः ॥ १५.

हेमाद्रिवद्भाति कदाचन स्वयं
मैनाकवद्यच्च कदाचन स्फुटं ।
हैमाद्रिवद्वर्णवरैः कदाचन
स्वैरं विचित्रैर्निपुणं विभावय ॥ १६.

रेखेव शेषोपि यदङ्घ्रिपङ्कजे
यत्केशगं व्योममणिर्यथासितः ।
विभाति तत्कुण्डलितार्कचन्द्रकं
स्वान्तर्बहिर्व्याप्तमखण्डदैहिकम् ॥ १७.

ब्रह्माभवत्क्षत्त्रमिदं यदोदनो
यस्यैव मृत्युर्मृदुलोपसेचनं ।
अदृष्टदृष्टं मम रूपमश्रुत-
श्रुतं कएताद्दगितीह तर्कयेत् ॥ १८.

एवं ब्रुवति सीतेशे हनुमान्मारुतात्मजः ।
भावयामास वेगेन तद्रूपं मीलितेक्षणः ॥ १९.

ततस्तद्भावनावेगात् ध्यानं कुर्वन् भयङ्करं ।
शिथिलाङ्गस्स्वयं भूमौ मूर्च्छाक्रान्तः पपातह ॥ २०.
श्रीरामश्च तमालोक्य मुहूर्तं सस्मितं ततः ।
निजाभ्यां पाणिपद्माभ्यामुत्थाप्यात्यादरेण च ॥ २१.
अद्भिस्सुशीतलैर्मन्दै र्दिव्यव्यजनमारुतैः ।
स्वयमाश्वासयामास तस्यासंज्ञोदयं प्रभुः ॥ २२.
सबाष्पगद्गदं पश्चाल्लब्धसंज्ञे मरुत्सुते ।
पुनश्च वर्णयामास विश्वरूपं रघूद्वहः ॥ २३.
तदाकर्ण्याञ्जनासूनुः श्रीरामचरणद्वयं ।
हस्ताभ्यां दृढमालम्ब्य स्तब्धकण्ठउवाचह ॥ २४.

॥ हनूमान् ॥

अहो विचित्रं भगव न्दयानिधे
त्वद्विश्वरूपस्य दुरूहवैभवं ।
तद्वर्णना द्वाचमथोपसंहर-
न्मां पाह्यधीरं वचनान्तरैर्गुरो ॥ २५.

रूपं हि ते मत्स्मृतिगोचरं महत्
पादौ क्वचित्कर्षति मे शयौ क्वचित् ।
अङ्गानिचान्यानि तथैव निर्दयं
नसह्यमेतत् क्षणमप्यहो मया ॥ २६.

मत्प्राणनाथस्त्व मनन्तवैभवः
सर्वात्मकः कोप्यसि सर्वशक्तिकः ।
यद्दुर्बलानामपि दुर्बलो भवं
मां पाहि कारुण्यरसार्द्रवीक्षणात् ॥ २७.

कावागतिर्मे भवदङ्घ्रिपङ्कज-
द्वयावलम्बं विधिदुर्लभं विना ।
यत्पुण्डरीकाक्ष भवामि दुर्मतिः
कपिश्च हीनो भुवि लक्ष्मणाग्रज ॥ २८.

मायां त्वदीयां रघुनाथ दुस्तरां
एनामजानन्नहमेषमोहितः ।
मेने पुरा धीरतरत्वमात्मनो
गुरोऽपराधं तममुं क्षमस्व मे ॥ २९.

त्वद्विश्वरूपस्फुरणं विनाप्यदः
प्रकृष्टपापौघनिकृन्तनक्षमं ।
त्वन्निर्गुणात्माधिगतो मयेति य-
स्तञ्चापराधं भगवन् क्षमस्व मे ॥ ३०.

मायामयत्वात्सगुणस्य पूर्णता
नैवोपपन्नेति मया हि निश्चितं ।
अन्तर्बहिस्सन् पुरुषोत्तम प्रभो
तञ्चापराधं कृपया क्षमस्व मे ॥ ३१.

श्रीजानकीलौल्य मपारमन्वहं
दृष्ट्वा त्वयीशे प्यविशेषबुद्धयः ।
ममाभवंस्त्वन्महिमाविचिन्तना
न्महापराधं तमहो क्षमस्व मे ॥ ३२.

एवं हनुमति प्राज्ञे ब्रुवति स्वरसं वचः ।
सबाष्पञ्च सरोमाञ्चं सकंपञ्च सगद्गदम् ॥ ३३.

श्रीरामचन्द्रो दयया भक्तवात्सल्यगर्भितं ।
मृदुलं वचनं श्लक्ष्णं महात्मा तमुवाचह ॥ ३४.

॥ श्रीरामः ॥

हनूमन्निदमास्तां ते वचनं भवमुक्तये ।
अवशिष्टांस्त्वमालोच्य परिपृच्छ पुनश्च माम् ॥ ३५.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीयपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
विश्वरूपनिरूपणं नाम
॥ द्वादशोऽध्यायः ॥

---

॥ हनूमान् ॥

आपदामपहर्त्रे ते दात्रे निखिलसंपदां ।
सर्वलोकाभिरामाय श्रीरामाय नमोनमः ॥ १.

केशवाय नमस्तुभ्यं नमो नारायणाय ते ।
माधवाय नमस्तुभ्यं गोविन्दाय नमोनमः ॥ २.

विष्णवे च नमस्तुभ्यं मधुसंसूदनाय ते ।
नमस्त्रिविक्रमायापि नमस्ते वामनाय च ॥ ३.

श्रीधराय नमस्तुभ्यं हृषीकेशाय ते नमः ।
पद्मनाभाय च नमो नमो दामोदराय च ॥ ४.

नमस्ते मत्स्यरूपाय नमस्ते कूर्मरूपिणे ।
नमो वराहरूपाय नृसिंहाय च ते नमः ॥ ५.

वामनाय नमस्तुभ्यं रामाय च नमोनमः ।
श्रीरामाय नमस्तुभ्यं बलरामाय ते नमः ॥ ६.

कृष्णाय च नमस्तुभ्यं कल्किरूपाय ते नमः ।
मयि प्रसन्नस्सततं जनार्दन भव प्रभो ॥ ७.

हरेराम हरेराम रामराम हरेहरे ।
हरेकृष्ण हरेकृष्ण कृष्णकृष्ण हरेहरे ॥ ८.

इति षोडशकं नाम्नां केचित्संसारतारकं ।
महामन्त्रं बुधाः प्राहु र्जानकीप्राणनायक ॥ ९.

केचित्तु रामनामेदं काश्यामाब्रह्मकीटकं ।
मरणावसरे कर्णे इति तारोपदेशतः ॥ १०.

अन्येचाष्टाक्षरं मन्त्रं साक्षात्प्रणवपूर्वकं ।
नमो नारायणायेति तारकं मन्त्रमुत्तमम् ॥ ११.

अन्येतु काश्यां तत्तारं शिवइत्यक्षरद्वयं ।
नमश्शिवाय चेत्येके शैवपञ्चाक्षरं तथा ॥ १२.

अन्ये तु प्रणवं सर्ववेदान्तोदितमव्ययं ।
एकाक्षरं सदा तारं सर्वाक्षरवरं शुभम् ॥ १३.

एवं हि बहुधा विप्रैः प्रोच्यते तारवादिभिः ।
तत्रैकं वद निश्चित्य ममोपास्त्यै रघूत्तम ॥ १४.

एवं हनूमता पृष्टः श्रीरामश्श्रुतिपारगः ।
बृहज्जाबालतपनपरिव्राजाद्ययाभिधाः ॥ १५.

मुक्तिकान्तास्समस्ताश्च श्रुतीस्तारकगोचराः ।
पौर्वापर्येण संवीक्ष्य निश्चितार्थमुवाचह ॥ १६.

॥ श्रीरामः ॥

हनूमंच्छृणु वक्ष्यामि सावधानमना भृशं ।
येन तारेण झटिति भवाब्धिं त्वं तरिष्यसि ॥ १७.

प्रायेण सर्वमन्त्राणां वैष्णवानां कपीश्वर ।
शैवानां चास्ति संसारतारकत्वं नसंशयः ॥ १८.

तथापि प्रणवाख्योयं मन्त्रस्सर्वोत्तमोत्तमः ।
यमेव तारकं साक्षान्मुक्त्यै सर्वेप्युपासते ॥ १९.

प्रणवव्यातिरिक्तानां मन्त्राणां भोगमोक्षयोः ।
विनियोगो भवेदेष मोक्षमात्रफलः खलु ॥ २०.

सचायं प्रणवोऽकारोकाराद्यैरक्षरैर्युतः ।
ओङ्काररूपस्सर्वेषु वेदान्तेषु प्रतिष्ठितः ॥ २१.

बृहस्पत्याऽदिशेषाद्या अस्य माहात्म्यवर्णने ।
अशक्तो मद्गुरुश्चापि वसिष्ठोऽरुन्धतीपतिः ॥ २२.

तस्मात्तद्वर्णनादद्य मया समुपरम्यते ।
तस्य त्ववश्यवेद्यौ त्वं स्वरूपार्थाविह श्रुणु ॥ २३.

अकारः प्रथमः प्रोक्त उकारस्तदनन्तरं ।
मकारश्चार्धमात्राच नादाबिन्दू ततःपरम् ॥ २४.

कला ततः कलातीता शान्तिश्शान्तेः परा ततः ।
उन्मन्येकादशी प्रोक्ता द्वादशी तु मनोन्मनी ॥ २५.

पुरीच मध्यमा पश्चात्पश्यन्ती च पराततः ।
एवं षोडशरूपोयं प्रणवस्सूक्ष्ममात्रकः ॥ २६.

एतासां च स्थूलसूक्ष्मबीजतुर्यप्रभेदतः ।
मात्राणां स्युश्चतुष्षष्टिरूपाणि पवनात्मज ॥ २७.

प्रकृत्या पुरुषेणैता अष्टाविंशतिकोत्तराः ।
शतमात्राश्च सिध्यन्ति द्वैविध्यं समुपाश्रिताः ॥ २८.

ततो द्विशतमात्रास्यु ष्षट्पञ्चाशत्पराश्च ताः ।
द्वैविध्यं सगुणेनापि निर्गुणेन समाश्रिताः ॥ २९.

एवं सुसूक्ष्ममात्रावत्प्रणवं विद्धि मारुते ।
अथास्यार्थं प्रवक्ष्यामि सावधानमनाश्शृणु ॥ ३०.

अखण्डसच्चिदानन्दं प्रसिद्धं ब्रह्म यत्परं ।
तदेव प्रणवस्यास्य मुख्योर्थ स्तारकस्य हि ॥ ३१.

या मात्रास्सगुणाऽपेता अष्टाविंशतिकोत्तराः ।
प्रोक्तास्तास्साधयन्त्यत्र ब्रह्मणस्स्वगताभिदाम् ॥ ३२.

तासु षोडशमात्राणां विवेकादिचतुष्टये ।
स्थूलादिभिन्नैन्तर्भावः षोडशात्माधिकारिषु ॥ ३३.

अन्यासां सप्तभूमीनां पूर्वोक्तानां यथाक्रमं ।
एकैकस्यां त्वया ज्ञेया मात्राष्षोडश षोडश ॥ ३४.

एवं मात्रा विभज्यैव विद्वद्भिः प्रणवो मनुः ।
स्वापरोक्षानुभूत्यर्थमुपास्यः श्रवणादिभिः ॥ ३५.

अविभक्तस्सुजप्योऽयं चित्तशुध्यैककारणं ।
निष्कामोपासकैश्शुद्धो यतिभिस्समुपाश्रितः ॥ ३६.

गौणत्वात्क्रममुक्त्यर्थं जपरूपमुपासनं ।
यथात्र मुख्यमप्येतत्कपे मन्नामकीर्तनम् ॥ ३७.

नामान्तराणां मुख्योर्थो गौणप्रणवगर्भितः ।
विभक्तमात्रप्रणवमुख्यार्थस्तु स्वगर्भितः ॥ ३८.

गौणप्रधानोपास्तौ हि सन्यास्यैको नियम्यते ।
मुख्यप्रधानोपास्तौ तु सर्वेप्यत्राधिकारिणः ॥ ३९.

एवं रामोपदिष्टार्थं श्रुत्वा वायुसुतोऽब्रवीत् ।
श्रुतं ते प्रणवार्थत्वं तत्कथं वद राघव ॥ ४०.

॥ श्रीरामः ॥

शृणु वक्ष्यामि तच्चार्थं हनूमन् भक्तिपूर्वकं ।
यस्य श्रवणमात्रेण सद्यश्शुद्धो भविष्यसि ॥ ४१.

अकाराक्षरसंभूतः सौमित्रिर्विश्वभावनः ।
उकाराक्षरसंभूतः शत्रुघ्नस्तैजसात्मकः ॥ ४२.

प्राज्ञात्मकस्तु भरतो मकाराक्षरसंभवः ।
अर्धमात्रात्मकोऽहं वै ब्रह्मानन्दैकविग्रहः ॥ ४३.

मम सान्निध्यवशतो जगदाधारकारिणी ।
उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम् ॥ ४४.

सीतेयं प्रोच्यते साक्षान्मूलप्रकृतिसंज्ञिका ।
प्राणवत्वात्प्रकृतिरित्यब्रुवन् ब्रह्मवादिनः ॥ ४५.

इयमेव महामाया विद्या चेयं परात्परा ।
मद्वक्षोनिधनासीना लक्ष्मीश्चेयं मरुत्सुत ॥ ४६.

अन्याश्च षोडशावस्थाः प्रणवस्य समीरिताः ।
ता जाग्रज्जाग्रदाद्यास्त्वं शृणुष्वावहितः कपे ॥ ४७.

इदं ममेति सर्वेषु दृश्यभावेष्वभावना ।
जाग्रज्जाग्रदिति प्राहु र्महान्तो वायुनन्दन ॥ ४८.

विदित्वा सच्चिदानन्दे मयि दृश्य परंपरां ।
नामरूपपरित्यागो जाग्रत्स्वप्नइतीर्यते ॥ ४९.

परिपूर्णचिदाकाशे मयि बोधात्मतां विना ।
न किञ्चिदन्यदस्तीति जाग्रत्सुप्तिस्समीर्यते ॥ ५०.

स्थूलादित्रिविधे बीजेप्यनष्टे तत्र यो भवेत् ।
मिथ्यात्वनिश्चयस्सम्य क्सजाग्रत्तुर्यमीर्यते ॥ ५१.

स्थूलज्ञानविनाशेपि कारणाभासचेष्टितैः ।
बन्धो न मेति स्वल्पोपि स्वप्नजाग्रदितीर्यते ॥ ५२.

कारणाज्ञाननाशाद्यद्द्रष्टृदर्शनदृश्यता ।
नकार्यमस्ति विज्ञानं स्वप्नस्स्वप्नस्समीर्यते ॥ ५३.

अतिसूक्ष्मविमर्शेन स्वधीवृत्तिरचञ्चला ।
विलीयते यदा बोधे स्वप्नसुप्तिरितीर्यते ॥ ५४.

आनन्दानुभवे प्राप्ते प्यखण्डस्थित्यलोपतः ।
सहजानन्दहानिस्सा स्वप्नतुर्यमितीर्यते ॥ ५५.

चिन्मयाकारमथ यो धीवृत्तिप्रसरैर्गतः ।
आनन्दानुभवस्स्वीयस्सुप्तिजाग्रदितीर्यते ॥ ५६.

वृत्तौ चिरानुभूताऽन्तरानन्दानुभवस्थितौ ।
समात्मतां यो यात्येषसुप्तिस्स्वप्नस्समीर्यते ॥ ५७.

दृश्य धीवृत्तिरीशस्य केवलीभावभावना ।
परं बोधैकतावाप्तिस्सुप्तिसुप्तिस्समीर्यते ॥ ५८.

अखण्डैकरसस्फूर्तिर्भावना निरपेक्षया ।
स्वयमाविर्भवेद्यत्र सुप्तितुर्यं समीर्यते ॥ ५९.

रसानुभूतिः पूर्वोक्ता सहजा यस्य जाग्रति ।
तदवस्था कपिश्रेष्ठ तुर्यजाग्रादितीर्यते ॥ ६०.

सानुभूतिर्भवेद्यस्य स्वप्नेपि सहजा सदा ।
दुर्लभा तदवस्था सा तुर्यस्स्वप्नस्समीर्यते ॥ ६१.

सुषुप्तावपि विष्फूर्तिरखण्डैकरसस्य चेत् ।
सुदुर्लभा तु सावस्था तुर्यसुप्तिस्समीर्यते ॥ ६२.

अखण्डैकरसो यत्र लीनः कतकरेणुवत् ।
अरूपा गोचरावस्था तुर्यतुर्यं समीर्यते ॥ ६३.

इमा हि षोडशावस्था विज्ञेयास्सूक्ष्मबुद्धिभिः ।
नवाच्या यस्यकस्यापि भवता कपिकुञ्जर ॥ ६४.

अष्टोत्तरशते श्रद्धा यस्यास्ति सुमहत्तरा ।
विदेहमुक्तिवाञ्छा च यस्यातीव प्रवर्धते ॥ ६५.

गुरुपादाम्बुजद्वन्द्वे यस्य भक्तिस्सुनिर्मला ।
दृष्टभोगेषु सर्वेषु यस्यारक्तिस्सुपुष्कला ॥ ६६.

जीवन्मुक्तस्य लक्ष्माणि यस्मिन्सर्वाणि सन्ति च ।
तस्यैवैता मयाप्रोक्ता वक्तव्या भवताऽदरात् ॥ ६७.

उक्तलक्षणहीनस्य वञ्चकस्य शठात्मनः ।
नास्तिकस्य कृतघ्नस्य भोगासक्तस्य सर्वदा ॥ ६८.

स्वस्याभिनयतो नित्यं जीवन्मुक्तस्थितिं परां ।
गुरुभक्त्यादिहीनस्य नवक्तव्याः कदाचन ॥ ६९.

कर्मिभ्यश्चापि भक्तेभ्यो ज्ञानिभ्यश्चापि मारुते ।
गोपनीयमिदं नित्यं वाच्यन्त्वात्मैक्ययोगिनाम् ॥ ७०.

वेदान्तार्था गोपनीयाश्च सर्वे
तुभ्यं प्रोक्ताः पारवश्येन सूक्ष्माः ।
तस्मादस्मान्नान्यदस्तीह गोप्यं
सर्वस्वं वै वायुसूनो ममैतत् ॥ ७१.

ताष्षोडश्यस्सूक्ष्ममात्राः प्रयुक्ता-
ओङ्कारस्य ब्रह्मचैतन्यरूपाः ।
तासां भेदास्सप्तभूम्योप्यवस्था-
ष्षोडश्योन्याः किन्त्वितोन्यद्रहस्यम् ॥ ७२.

प्रष्टव्यार्थो नैव कश्चित्त्वयान्यो
वक्तव्यार्थो नैव कश्चिन्मया वा ।
आचार्येण श्रीमता मे तथापि
श्रोतव्यार्थस्तेऽस्ति चेत् पृच्छ भूयः ॥ ७३.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीयपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
तारकप्रणवविभागयोगो नाम
॥ त्रयोदशोऽध्यायः ॥

---

॥ हनूमान् ॥

श्रीराम जगतीनाथ महावाक्यचतुष्टयं ।
चतुर्वेदरहस्यार्थं वदन्ति ब्रह्मवादिनः ॥ १.

उपदेशक्रमं तस्य तथाभ्यासक्रमं ततः ।
अनुबन्धक्रमञ्चापि यथावद्वद मे गुरो ॥ २.

॥ श्रीरामः ॥

हनूमनृग्यजुस्सामाथर्वणाख्या हि विश्रुताः ।
चत्वारो कृतवाग्रूपा वेदा आद्यन्तवर्जिताः ॥ ३.

तेषामाद्ये स्थितं वाक्यं प्रज्ञानं ब्रह्मचेत्यदः ।
पदद्वयवदाचार्यैरादौ समुपादिश्यते ॥ ४.

द्वितीयेतु स्थितं वाक्यमहंब्रह्मास्मि चेत्यदः ।
पदत्रयवदेतत्तैः पश्चादेवोपादिश्यते ॥ ५.

त्रितीये च स्थितं वाक्यमिदं तत्वमसीति च ।
पदत्रयवदेतच्च ततएवोपादिश्यते ॥ ६.

अयमात्मा ब्रह्म चेति वाक्यस्तुर्ये स्थितं महत् ।
पदत्रयवदेतच्च ततएवोपादिश्यते ॥ ७.

एवं क्रमेण वाक्यानि शिष्यो भक्तिपुरस्सरं ।
अङ्गन्यासकरन्यासैर्गृह्णीयात्सद्गुरोर्मुखात् ॥ ८.

यतीनां मुख्यमप्येतन्महावाक्यचतुष्टयं ।
इतराश्रमिणाञ्चापि मुख्यं मोक्षेच्छुता यदि ॥ ९.

क्रमो वाक्योपदेशस्य मयोक्तः कपिनायक ।
उपदेशक्रमोर्थानामिदानीं प्रोच्यते श्रुणु ॥ १०.

अयमात्मा ब्रह्मवाक्यं तुर्यवेदगतं तु यत् ।
तस्यार्थः प्रथमं वाच्य स्साच्छिष्यायाधिकारिणे ॥ ११.

प्रत्यग्रूपोऽयमात्मा हि साक्षाद्ब्रह्मैव नापरः ।
इत्यैक्यं गुरुणा शुध्यै पारोक्ष्येणोपदिश्यते ॥ १२.

सामवेदगतं यत्तु वाक्यं तत्वमसीत्यथ ।
तस्यार्थः पदशो वाच्यस्संबन्धायोत्तमाय च ॥ १३.

अखण्डं निर्गुणं ब्रह्म तत्पदेन तु लक्ष्यते ।
प्रत्यगात्मा त्वं पदेनत्वसीत्यैक्यार्थमिष्यते ॥ १४.

अहंब्रह्मास्मि वाक्यं तु यजुर्वेदगतं महत् ।
तस्यार्थोऽनन्तरं वाच्योह्यभ्यासविषयार्थिने ॥ १५.

देहादिसाक्षिभूतोऽहं कूटस्थो निर्गुणं परं ।
पूर्णं ब्रह्मास्मि शब्दोयमैक्याभ्यासार्थइष्यते ॥ १६.

प्रज्ञानं ब्रह्मवाक्यं यदृग्वेदगतमुत्तमं ।
तस्यार्थो वर्णनीयाथ स्वानुभूतिप्रयोजनः ॥ १७.

येन जीवो विजानाति सर्वं प्रज्ञानमेव तत् ।
सर्वगं सच्चिदानन्दलक्षणं ब्रह्म कथ्यते ॥ १८.

एवं श्रुत्वा रहस्यज्ञो हनूमान् मारुतात्मजः ।
प्रश्रयावनतो भूत्वा मृदु पप्रच्छ राघवं ॥ १९.

॥ हनूमान् ॥

प्रातिलोम्येन वाक्यार्थो वर्णितो योयमच्युत ।
रहस्योपनिषद्वाक्यविरोधीति विभाति मे ॥ २०.

येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ।
स्वाद्वस्वादु विजानाति तत्प्रज्ञानमुदीरितम् ॥ २१.

चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु ।
चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ॥ २२.

परिपूर्णः परात्मास्मिन्देहे विद्याधिकारिणी ।
बुद्धेस्साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥ २३.

स्वतःपूर्णः परात्मात्र ब्रह्मशब्देन वर्णितः ।
अस्मीत्यैक्यपरामर्शात्तेन ब्रह्मभवाम्यहम् ॥ २४.

एके मे वाऽद्वितीयं सन्नामरूपाविवर्जितं ।
सृष्टेः पुराऽधुनाप्यस्य तादृक्त्वं तदितीर्यते ॥ २५.

श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वंपदेरितं ।
एकता गृह्यतेऽसीति तदैक्यमनुभूयताम् ॥ २६.

स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतं ।
अहङ्कारादिदेहान्तात्प्रत्यगात्मेति गीयते ॥ २७.

दृश्यमानस्य सर्वस्य जगतस्तत्वमीर्यते ।
ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥ २८.

इत्येवं हि शिवेनोक्तं शुकब्रह्मर्षयेऽष्टकं ।
अत्रानुलोम्यमेवास्ति वाक्यार्थस्य रघूत्तम ॥ २९.

राम श्रुत्वैवमाक्षेपं सप्रमाणं हनूमतः ।
किञ्चिद्विस्मयमापन्नः प्रत्युवाच महामतिः ॥ ३०.

॥ श्रीरामः ॥

हनूमन् साधुरेवायमाक्षेपश्रुतिपूर्वकः ।
तथाप्यवेहि सिद्धान्तं मदुक्तक्रममादरात् ॥ ३१.

आचार्येणैव कर्तव्यो यतस्तत्वमसीत्ययं ।
उपदेशस्ततःपूर्वमिदं वाक्यमिति स्फुटम् ॥ ३२.

शिष्येणैव च कर्तव्योऽहंब्रह्मास्मीत्ययं यतः ।
अभ्यासस्ततएतत्तु वाक्यं पश्चादिति स्फुटम् ॥ ३३.

अनयोर्वाक्ययोस्स्पष्टपौर्वापर्येण चामुना ।
आदावाथर्वणं वाक्यं विध्यन्तेर्ग्वेदगं महत् ॥ ३४.

प्रातिलोम्याभ्युपगमे प्यनुबन्धचतुष्टयं ।
क्रमेण सिध्यति प्राज्ञैस्तन्नवाच्योऽन्यथा ध्रुवम् ॥ ३५.

रहस्योक्तोपदेशस्तु न मृषा पारमेश्वरः ।
तथा वाक्योपदेशो हि सामान्यार्थश्च मारुते ॥ ३६.

वाक्यानुग्राहकन्यायपरिशीलनलक्षणं ।
मननं यदि तत्रासीद्विशेषार्थस्तव स्फुरेत् ॥ ३७.

अनुबन्धाविरोधेन मीमांसायामिहेदृशी ।
मदुक्तप्रातिलोम्यं हि समीचीनं भवत्यलम् ॥ ३८.

त्वमेव सम्यक्पश्येदं गुरुशिष्यक्रमोदितं ।
यजुस्सामगतं वाक्यद्वयं पवननन्दन ॥ ३९.

उपदेशविना कोवा ब्रह्मात्मैक्यं समभ्यसेत् ।
अस्यां महत्यां युक्तौ ते संशयो मास्तु कश्चन ॥ ४०.

सद्गुरूक्तस्य चार्थस्य मन्तव्यत्वं परीक्षया ।
श्रुत्यैव प्रोच्यते तस्मात्साधुरेषा विचारणा ॥ ४१.

महावाक्यात्मको मन्त्रो गुह्याद्गुह्यतरोप्ययं ।
तुभ्यं मयादरेणाद्य व्यक्तएवोपदिश्यते ॥ ४२.

वाक्यावधारणेप्यत्र कृतकृत्योभवेन्नरः ।
विविच्य किमु वक्तव्यमेवमर्थावधारणे ॥ ४३.

सर्वमन्त्रोपदेष्टृभ्यो महावाक्योपदेशिकः ।
उत्तमस्सर्वदाऽराध्यस्ततोप्यर्थोपदेशिकः ॥ ४४.

महावाक्यार्थदातारं प्राणेभ्योप्यधिकं बुधाः ।
आहुः प्राणाधिकात्मैक्यनिष्ठा प्राप्ता यतोऽमुना ॥ ४५.

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिताह्यर्था प्रवर्धन्ते सुविस्तराः ॥ ४६.

महावाक्योदितानर्थानेतांच्छ्रुत्वा ममाननात् ।
मत्वा मया स्वयं ध्यात्वा मामेवैष्यस्यसंशयम् ॥ ४७.

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते तव कर्माणि मयि दृष्टे परावरे ॥ ४८.

एवं सति मदुक्तार्थे तवान्यस्संशयो भवेत् ।
दशोपनिषदश्श्रैष्ठ्यमष्टोत्तरशतादपि ॥ ४९.

अथवा साम्यमेवास्तां सामान्यादुभयोरपि ।
महावाक्योपदेशस्य नाधिकत्यमिति मारुते ॥ ५०.

नैषयुक्तस्समाधीनामष्टोत्तरशते यतः ।
स्वानुभूत्येकहेतूनां प्रपञ्चो नेतरत्र तु ॥ ५१.

यथात्र कृतयज्ञस्य फलं स्वर्गेऽनुभूयते ।
तथा दशोक्तवाक्यानां फलमष्टोत्तरेशते ॥ ५२.

अहमेव यतोऽस्म्यर्थो वाक्यानां महतामपि ।
ततो मदेकशरणो मद्याजी मां नमस्कुरु ॥ ५३.

मद्दर्शनं मच्छ्रवणं मदेकमननं सदा ।
मन्निदिध्यासनं नित्यं समाधिश्चास्तु ते मयि ॥ ५४.

एवं यद्यावयोर्भेदो गुरुशिष्यइतीरितः ।
चैतन्यैकस्वरूपत्वादात्मनो गळितो भवेत् ॥ ५५.

वस्तुतो हि त्वमेवाहमहमेव त्वमद्य वा ।
आवयोर्भेदवार्ता तु व्यवहारैकगोचरा ॥ ५६.

त्वामहं वेद्मि सर्वज्ञो मां त्वं वेत्सि न सर्वथा ।
अतोऽत्र भेदस्सिद्धोऽस्ति व्यवहारेऽञ्जनासुत ॥ ५७.

कालत्रयेप्यनन्यत्वमन्यत्वं वा न युज्यते ।
आद्यन्तयोरनन्यत्वान्मध्येऽन्यत्वाच्च कार्यतः ॥ ५८.

नापि मध्यगतान्यत्व मविनाशी कथञ्चन ।
मृण्मध्यस्थघटत्वस्य विनाशित्वप्रदर्शनात् ॥ ५९.

त्वं शिष्यलक्षणोपेतो मदन्यस्ससततं यदि ।
प्रकुप्येयुः श्रुतेश्शब्दा मम पूर्णत्ववादिनः ॥ ६०.

अतस्त्वं श्रुतियुक्तिभ्यां त्वद्भिदां व्यावहारिकीं ।
निश्चित्य मे लभस्वारादभिदां पारमार्थिकीम् ॥ ६१.

इत्युक्तः कपिशार्दूलः परमानन्दपूरितः ।
प्रणम्य शिरसा राममिदं वचनमब्रवीत् ॥ ६२.

॥ हनूमान् ॥

कृतार्थोऽहं कृतार्थोऽहं कृतार्थोऽहं पुनःपुनः ।
अद्य मे सफलं जन्माप्यद्य मे सफलं तपः ॥ ६३.

अद्य मे सफलं दानमद्य मे सफलं कुलं ।
अद्य मे सफलं कृत्यमद्य मे सफलं बलम् ॥ ६४.

अहोज्ञानमहोज्ञानं अहोसुखमहोसुखम् ।
अहोशास्त्रमहोशास्त्रं अहोगुरुरहोगुरुः ॥ ६५.

रामचन्द्र दयासिन्धो सर्ववेदान्तसागर ।
तुभ्यन्देयं न पश्यामि किञ्चिदत्र न मामपि ॥ ६६.

त्वमेव देहश्च मम त्वमेव सर्वेन्द्रियाणित्वमिदं मनश्च ।
प्राणास्त्वमेव त्वमहञ्च सर्वं त्वमेव मे मोचकदेशिकेश ॥ ६७.

अपारसंसारसमुद्रमग्नं मां श्वापदं ह्युद्धृतवांस्त्वमेवं ।
अतस्त्वदन्यो मम कोऽत्र नाथस्त्रातास्त्वयोद्धेश नमोनमस्ते ॥ ६८.

यदङ्घ्रिपङ्केरुहदर्शनार्थं ब्रह्मेन्द्रपूर्वास्सकलाऽमराश्च ।
तीव्रन्तपश्चेरुरयं प्रसन्नस्त्वं मे रघुश्रेष्ठ नमो नमस्ते ॥ ६९.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीयपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
महावाक्यार्थविवरणं नाम
॥ चतुर्दशोऽध्यायः ॥

---

॥ हनूमान् ॥

रघुनाथ दयासिन्धो श्रोतव्यं निखिलं श्रुतं ।
तथापि नवचक्राणां विवेकं मे वद प्रभो ॥ १.

॥ श्रीरामः ॥

श्रृणु वक्ष्याम्यशेषेण श्रुत्युक्तेनैव वर्त्मना ।
नवचक्रविवेकं ते वायुसूनो महामते ॥ २.

मूलाधाराभिधञ्चक्रं प्रथमं समुदीरितं ।
तत्र ध्येयं स्वरूपन्तु पावकाकारमुच्यते ॥ ३.

स्वाधिष्ठानाभिधं चक्रं द्वितीयञ्चोपरिस्थितं ।
प्रवाळाङ्कुरतुल्यन्तु तत्र ध्येयं निगद्यते ॥ ४.

त्रितीये नाभिचक्रेतु ध्येयं रूपं तटिन्निभं ।
तुर्ये हृदयचक्रेतु ज्योतिर्लिङ्गाकृतीर्यते ॥ ५.

पञ्चमे कण्ठचक्रेतु सुषुम्ना श्वेतवर्णिनी ।
ध्येयं षष्ठे तालुचक्रे शून्यं चित्तलयार्थकम् ॥ ६.

भ्रूचक्रे सप्तमे ध्येयं दीपाङ्गुष्ठप्रमाणकं ।
आज्ञाचक्रेऽष्टमे ध्येयं रूपं धूम्रशिखाकृति ॥ ७.

आकाशचक्रे* नवमे परशुस्स्वोर्ध्वशक्तिकः ।
एवं क्रमेण चक्राणि ध्येयरूपाणि विद्धि च ॥ ८.

अखण्डैकरसत्वेन ध्येयस्यैक्येप्युपाधितः ।
आकारा विविधा युक्ता नोपाधिश्चेतरस्त्वतः ॥ ९.

विद्या शक्तिविलासेन पावकाद्विष्फुलिङ्गवत् ।
एकस्माद्ब्रह्मणोऽखण्डात् विविधाकृतयोऽभवन् ॥ १०.

प्रत्यगात्माभिधानान्तदेतेषां ध्येयवस्तुनां ।
अचेतनत्वं स्वप्नेपि नशंक्यं विबुधैरपि ॥ ११.

अन्येच योगिभिर्ध्यानेष्वाकाराश्चेतनात्मकाः ।
दृश्यन्ते तांश्च वक्ष्यामि सावधानमनाश्शृणु ॥ १२.

---

* नवममाकाशचक्रमिति सौभाग्यलक्ष्म्युपनिषदा दृश्यते.
आज्ञाचक्रेच इति मूलन्त्वपपाठमेव.

वटस्य कणिकाकारश्श्यामाकसदृशः क्वचित् ।
श्यामाकतण्डुलाकारो वालाग्रशतभागवत् ॥ १३.

नीवारशूकवच्छुक्रज्योतिर्वत्सूर्यवत्क्वचित् ।
चन्द्रवच्चाणुवत्सूक्ष्मः प्रादेशपरिमाणवान् ॥ १४.

खद्योतवच्च स्फटिकसदृशस्तारवत्क्वचित् ।
नीलज्योतिः क्वचिद्रक्तज्योतिश्शुभ्रद्युतिः क्वचित् ॥ १५.

विविधज्योतिरन्यत्र ज्योतिषांज्योतिरेव सः ।
अभिव्यक्तिकराएवमाकारा ब्रह्मणि स्थिताः ॥ १६.

योगिनां यतचित्तानां जितश्वासेन्द्रियात्मनां ।
ध्यानेनामी प्रकाशन्ते चिदाकाराः पुनःपुनः ॥ १७.

व्यवहारदशायाञ्च योगिनः खण्डरूपकं ।
स्तंभकुड्यकुसूलादिष्विदं ज्योतिः प्रकाशते ॥ १८.

यत्र यत्र विकारेषु दृष्टिः पतति योगिनः ।
ते सर्वे चिन्मया भान्ति तटिद्वत्तत्क्षणे भृशं ॥ १९.

उक्तात्मभानतः पूर्वं पश्चाच्च विविधा क्रपे ।
अभिव्यज्यन्त एतस्य नादास्तत्सिद्धिसूचकाः ॥ २०.

मृदङ्गनादवत् घण्टानादवन्मेघनादवत् ।
वीणानिनादवच्छङ्खनादवत्तेप्यनेकधा ॥ २१.

नादान्ते विदितं ज्योतिर्येनैव ध्यानयोगतः ।
तस्येन्द्रियाणि वश्यानि सदश्वाइव सारथेः ॥ २२.

येनाविदितमेतत्तु ज्योतिरब्रह्मता धिया ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वाइव सारथेः ॥ २३.

ज्योतिरेव परं ब्रह्म ज्योतिरेव परं सुखं ।
ज्योतिरेव पराशान्तिर्ज्योतिरेव परंपदम् ॥ २४.

ज्योतिरेव परं लक्ष्यं ज्योतिरेव परागतिः ।
ज्योतिरेव परं रूपं तस्माज्ज्योतिर्विलोकयेत् ॥ २५.

ज्योतिरेव परं ब्रह्म ब्रह्मैव ज्योतिरव्ययं ।
ज्योतिरेव परात्मासौ परात्मा ज्योतिरुत्तमम् ॥ २६.

ज्योतिश्चाहमहं ज्योतिः ज्योतिस्त्वं त्वं च तत्खलु ।
तस्मात्सर्वप्रयत्नेन ज्योतिरन्वेषणं कुरु ॥ २७.

अंशांशित्वविभागोयं प्रत्यगात्म परात्मनोः ।
आब्रह्मात्मैक्य बोधात्स्यात् सफलो न ततःपरं ॥ २८.

नवचक्रेषु यः पश्येद्यत्रकुत्रापि योगतः ।
प्रत्यगात्मानमन्तेयं ब्रह्मलोके महीयते ॥ २९.

विज्ञाननिश्चितार्थानां यतीनां या परागतिः ।
प्रोक्ता सैवास्य विदुषो नात्रकार्या विचारणा ॥ ३०.

उक्तलक्षणमात्मानं कूटस्थं सद्गुरोर्मुखात् ।
श्रुत्वात्र पश्येद्ध्यानेन मुद्रया भद्रयापि च ॥ ३१

एतद्दर्शनहीनस्य वाक्यार्थश्रवणादिषु ।
हनूमन्नाधिकारोऽस्ति चित्तसंशुद्ध्यसंभवात् ॥ ३२.

एतदभ्यासकाले तु प्रतिबन्धाभवन्त्यलं ।
स्वेदकम्पभयभ्रान्तिनिद्रालस्यलयादयः ॥ ३३.

युक्त्या सुसूक्ष्मया धीमांस्तान्निरस्य प्रयत्नतः ।
एकान्तसेवया नित्यमभ्यसेत्तमतन्द्रितः ॥ ३४.

पुत्रदारादयो लोका देवाइन्द्रादयोपि च ।
निष्कामस्यास्य योगस्य भवेयुर्विघ्नकारिणः ॥ ३५.
वैराग्येण सुतीव्रेण तान्विघ्नांश्च महामतिः ।
निहत्याक्षुब्धहृदयो ध्यानयोगं सदाऽभ्यसेत् ॥ ३६.
क्रमेण परमात्मानं सद्गुरोः करुणाबलात् ।
दृष्ट्वा योगी स्वरूपज्ञो भवेदिह जितेन्द्रियः ॥ ३७.
एवमुक्तः कपिश्रेष्ठश्श्रद्धया परया युतः ।
जानकीरमणं शान्तं पुनः पप्रच्छ राघवम् ॥ ३८.

॥ हनूमान् ॥

स्वामिन् जितेन्द्रियस्यात्र लक्षणं किं वद प्रभो ।
येन विद्वानयञ्चायमविद्वानिति वेद्म्यहम् ॥ ३९.

॥ श्रीरामः ॥

कामः क्रोधस्तथा दर्पो लोभमोहादयश्च ये ।
तांस्तु दोषान् परित्यज्य परिव्राण्णिर्मलो भवेत् ॥ ४०.
रागद्वेषवियुक्तात्मा समलोष्ठाश्मकाञ्चनः ।
प्राणिहिंसानिवृत्तश्च मुनिस्स्यात्सर्वनिस्पृहः ॥ ४१.
डंभाहङ्कारनिर्मुक्तो हिंसापैशुन्यवर्जितः ।
आत्मज्ञानगुणोपेतो यतिर्मोक्षमवाप्नुयात् ॥ ४२.
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयं ।
सन्नियम्य कृतान्येव ततस्सिद्धिं निगच्छति ॥ ४३.
नजातुकामः कामानामुपभोगेन शाम्यति ।
अभिवर्धतएवायं हविषाग्निरिवाधिकम्* ॥ ४४.

---

* हविषा कृष्णवर्त्मेव भूयएवाभिवर्धते इति पाठान्तरम्.

श्रुत्वा स्पृष्ट्वाच भुक्त्वा च दृष्ट्वाऽऽघ्रात्वा च यो नरः ।
सहृष्यति श्लावति वा साविज्ञेयो जितेन्द्रियः ॥ ४५.

इदं मृष्टमिदन्नेति योऽश्नन्नपि न सज्जति ।
हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते ॥ ४६.

अद्य जातां यथा नारीं तथा षोडशवार्षिकीं ।
शतवर्षाञ्च यो दृष्ट्वा निर्विकारस्सषण्डकः ॥ ४७.

भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च ।
योजनान्नपरं याति सर्वथा पङ्गुरेव सः ॥ ४८.

तिष्ठतो व्रजतो वापि यस्य चक्षुर्नदूरगं ।
चतुर्युगां भुवं मुक्त्वा परिव्राट् सोऽन्धउच्यते ॥ ४९.

हिताहितं मनोरामं वचश्शोकावहञ्च यत् ।
श्रुत्वापि न शृणोतीव बधिरस्सप्रकीर्तितः । ५०.

सान्निध्ये विषयाणां यस्समर्थोऽविकलेन्द्रियः ।
सुप्तवद्वर्तते नित्यं साभिक्षुर्मुग्धउच्यते ॥ ५१.

इन्द्रियाणि समाहृत्य कूर्मोऽङ्गानीव सर्वशः ।
क्षीणेन्द्रियमनोवृत्तिर्निराशीर्निष्परिग्रहः ॥ ५२.

निर्ममो निरहङ्कारो निरपेक्षो निराशिषः ।
विविक्तदेशसंसक्तो मुच्यते नात्रसंशयः ॥ ५३.

सम्मानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव ।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥ ५४.

सुखं ह्यवमतश्शेते सुखञ्च प्रतिबुध्यते ।
सुखञ्चरति लोकेऽस्मिन्नवमन्ता विनश्यति ॥ ५५.

अतिवादांस्तितिक्षेत नावमन्येत कश्चन ।
नचेमन्देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ ५६.

क्रुध्यन्तं न प्रतिक्रुध्येदाकृष्टः कुशलं वदेत् ।
सप्तद्वारावकीर्णाञ्च न वाचमनृतां वदेत् ॥ ५७.

अध्यात्मरतिरासीनस्सर्वत्र समदर्शनः ।
आत्मनैवासहायेन सुखार्थी विचरेदिह ॥ ५८.

इन्द्रियाणां निरोधेन रागद्वेषक्षयेन च ।
अहिंसया च भूतानाममृतत्वाय कल्पते ॥ ५९.

अयमर्थो यतेरेव नान्यस्येति न निश्चिनु ।
इतराश्रमिणामेषमुमुक्षुत्वे नियम्यते ॥ ६०.

उक्तलक्षणसंपत्तिस्समा द्विविधयोगिनां ।
आधारस्थात्मयुक्ता ये निराधारात्मयोगिनः ॥ ६१.

तुर्ये हृदयचक्रे यः कूटस्थो भाति चेतनः ।
निर्लेपो जीवसाक्षित्वाद्ब्रह्मांशत्वाच्च संस्थितः ॥ ६२.

छत्रिन्यायेन संसारबद्धत्वमुपचर्यते ।
जीवाश्रयत्वाद्धंसस्य साहचर्याच्च सर्वदा ॥ ६३.

नाडीनामाश्रयः पिण्डो नाड्यः प्राणस्य चाश्रयाः ।
जीवस्य निलयः प्राणो जीवोहंसस्यचाश्रयः ॥ ६४.

हंसशब्दोदितो ह्येषकूटस्थः प्रत्यगाह्वयः ।
ऋतपानादिरहितस्सर्वदा भासते स्वयम् ॥ ६५.

हंसशब्दस्स्वयं साक्षाद्ब्रह्मात्मत्वं ब्रवीत्ययं ।
अकारलुप्तहङ्कारात्स्वब्रह्म च सकारतः ॥ ६६.

तस्माद्ब्रह्मात्मता सिध्यै हंसमन्त्रं सदाऽभ्यसेत् ।
मन्त्राणामुत्तमं मन्त्रं हंसमन्त्रं प्रचक्षते ॥ ६७.

आधाराधिष्ठितत्वेन केचित्सगुणतां विदुः ।
तन्नसङ्गतमेवास्य ज्योतिष्मत्वात्स्फुलिङ्गवत् ॥ ६८.

ज्योतष्षंसगुणस्यापि प्रवदन्तीह केचन ।
तत्तु मायासमेतत्वान्नमुख्यमवकल्पते ॥ ६९.

आधारेषु समस्तेष्वप्युक्तस्य प्रत्यगात्मनः ।
द्रष्टव्यत्वस्य नियमो नैव चित्तविशुद्धये ॥ ७०.

यत्रकुत्रापि चाधारे दृष्ट्वा ध्यानेन तं ततः ।
शुद्धचित्तो महावाक्यश्रवणेऽधिकृतो भवेत् ॥ ७१.

एवं विदित्वा नवचक्रसंस्थ मात्मानमानन्दचिदंशरूपं ।
यस्सर्वसंसारनिवृत्तिकामस्संपूर्णरूपं विशते क्रमेण ॥ ७२.

दृष्ट्वोक्तमात्मानमथात्मविन्मुखा-
द्ब्रह्मात्मनोस्तत्वमसीति चैकतां ।
श्रुत्वाऽथ मत्वा च तदेकनिष्ठया
प्रयाति सद्यः परमं पदं मम ॥ ७३.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीयपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
नवचक्रविवेकयोगो नाम
॥ पञ्चदशोऽध्यायः ॥

---

॥ हनूमान् ॥

भगवन् जानकीकान्त ब्रह्मविज्ञानिनामिह ।
अणिमाद्या महासिद्धीर्लक्ष्माण्याहुश्च केचन ॥ १.

ममापि तत्र विश्वासो भवत्येव यतोऽखिलाः ।
तद्वन्तःपूर्वकाश्रीमद्वासिष्ठादिमहर्षयः ॥ २.

॥ श्रीरामः ॥

हनूमंच्छृणु वक्ष्यामि सावधानेन चेतसा ।
अवश्यश्राव्यमेवेदं यतस्सर्वोत्र मुह्यति ॥ ३.

द्रव्यादिसाध्या अष्टौ यदाणिमाद्याश्च सिद्धयः ।
ब्रह्मज्ञानविरोधिन्यो मुमुक्षुस्ता नवाञ्छति ॥ ४.

इच्छाऽधिक्येन सिद्धिस्स्यादनिच्छाधिक्यतः परा ।
मुक्तिरेकत्र वासोन तदन्योन्यविरुद्धयोः ॥ ५.

नात्रोदाहरणीयास्ते श्रीवसिष्ठादयो यतः ।
आधिकारिकतां प्राप्तास्सर्वज्ञात्परमेश्वरात् ॥ ६.

जन्मान्तरकृतैस्तीव्रैर्ज्ञानकर्मसमुच्चयैः ।
सिद्धिज्ञानउभे प्राप्ता अन्येषान्ते नृणां कथम् ॥ ७.

जगत्प्रतीतिहीनत्वाद्विदेहस्य न सिद्धिषु ।
विस्मयस्तु भवेज्जीवन्मुक्तादेरिति चेच्छृणु ॥ ८.

दर्शितासु विचित्रासु सिद्धिष्वत्यद्भुतास्वपि ।
न क्वचिद्विस्मयं गच्छेज्जीवन्मुक्तो हसन्निह ॥ ९.

अपि शीतरुचावर्के सुतीक्ष्णेऽपीन्दुमण्डले ।
अप्यधःप्रसरत्यग्नौ जीवन्मुक्तो न विस्मयी ॥ १०.

मायीशनिर्मितैर्भावैरत्याश्चर्यकरैरपि ।
अमोहितं कथं धीरं मोहयेयुः कुसिद्धयः ॥ ११.

येकेचन जगद्भावास्तानविद्यामयान्विदुः ।
कथं तेषु किलात्मज्ञस्त्यक्ताविद्यो निमज्जति ॥ १२.

सामानाधिकरण्यन्तु न कलौ स्यात्कचिज्जने ।
अधिकारवतां पुंसां तादृशानामभावतः ॥ १३.

अत्र येऽद्भुतकर्माणोऽप्यधिकाराअपीश्वराः ।
ईशांशा ऊर्जितत्वात्ते न यथा कुमुदादयः ॥ १४.

अष्टादशप्रसिद्धास्ते सिद्धिप्राधान्यवादिनः ।
अगस्त्यप्रमुखास्सिद्धास्त्वधिकाराडुभे गताः ॥ १५.

तस्मात्त्यक्त्वैव सिद्धीच्छाम्मुमुक्षुः पुरुषोत्तमः ।
अष्टोत्तरशताभ्यासं कुर्याद्ज्ञानैकवाञ्छया । १६.

अष्टोत्तरशते प्रोक्तास्सिद्धयः किल मारुते ।
मन्दबुद्ध्यनुरोधेनेत्येव विद्धि विचक्षण ॥ १७.

श्रुतिस्मृतिपुराणेषु सिद्धीनां दूषणं बहु ।
श्रुतमेव ततः प्राज्ञ स्वप्नेप्याकांक्षते न ताः ॥ १८.

सकामैस्सगुणोपास्त्या साध्यास्तास्सिद्धयो नृभिः ।
निष्कामैर्निर्गुणोपास्त्या साध्यं ज्ञानं परात्मनः ॥ १९.

एवं सति कथं नृणां द्वयोस्साधनयोरिह ।
फलयोर्वापि संसिद्धिः प्रकाशतमसोरिव ॥ २०.

तस्मादात्मविदामत्र लक्षणानीति सिद्धयः ।
इमां मतिं परित्यज्य विद्ध्यन्यानि मरुत्सुत ॥ २१.

निर्ममत्वमहङ्कारहीनत्वं सङ्गहीनता ।
सदा शान्त्यादियुक्तत्वं संसारेऽस्मिन्विरक्तता ॥ २२.

जितेन्द्रियत्वमात्मेक्षा तत्परत्वमहर्निशं ।
निष्परिग्रहता द्वन्द्वसमता निरपेक्षता ॥ २३.

सर्वव्यापारवैमुख्यं निजानन्दैकसक्तता ।
एवमादीनि सर्वाणि ज्ञानिनां लक्षणानि तु ॥ २४.

अणिमाद्यन्यसिद्धीच्छां स्वात्मसिद्धीच्छया भृशं ।
विहायात्मैकनिष्ठो यस्सस्वसिद्धो नरोत्तमः ॥ २५.

ऐन्द्रजालिकतुल्यत्वात्सिद्धीनां नैव सत्यता ।
इति यस्य स्थिरा बुद्धिस्सस्वसिद्धो नरोत्तमः ॥ २६.

दरिद्रधनिनोः पुण्यपापयोश्शत्रुमित्रयोः ।
शीतोष्णयोस्समो योऽस्ति सस्वसिद्धो नरोत्तमः ॥ २७.

यस्तु सिद्धीरुपेक्ष्यैव निरन्तरसमाधिना ।
नित्यानन्दमवाप्नोति सस्वसिद्धो नरोत्तमः ॥ २८.

मोक्षस्य बहवश्शास्त्रे प्रोच्यन्ते प्रतिबन्धकाः ।
अणिमादीच्छया तुल्यः प्रतिबन्धो न कश्चन ॥ २९.

यस्याणिमादिसिद्धीच्छा लेशमात्रापि वर्तते ।
कल्पकोट्यापि तस्यात्मज्ञानसिद्धिर्नसेत्स्यति ॥ ३०.

विटसंसर्गवत्सिद्धसंसर्गं मोहवर्धकं ।
महाभयङ्करं ज्ञात्वा सिद्धांस्त्यजति यो नरः ॥ ३१.

तस्य निर्विघ्नमेकान्तनिष्ठया निर्विकल्पया ।
अनायासमिहैवात्मज्ञानसिद्धिर्भवेद्ध्रुवम् ॥ ३२.

यस्यात्मज्ञानगन्धस्य गन्धोवा यदि विद्यते ।
तस्य सिद्धिषु सर्वासु मोहो नोपनतास्वपि ॥ ३३.

ऐन्द्रजालिक कर्तापि भ्रान्तान् भ्रमयति स्वयं ।
अभ्रान्तएव सिद्धस्तु स्वभ्रान्तो भ्रमयत्यहो ॥ ३४.

अज्ञानं सिद्धिरूपेण ह्यविद्याध्याससांज्ञिकं ।
देहात्मज्ञानिषु स्वैरं स्फुटमेव प्रकाशते ॥ ३५.

ब्रह्मद्रोह शिवद्रोह गुरुद्रोहादिपातकं ।
पूर्वजन्मकृतं सर्वं विद्धि सिद्धिफलं कपे ॥ ३६.

पापानां महतां ज्ञानप्रतिबन्धकता यथा ।
तथाऽणिमादिसिद्धीनामतस्सिद्धिमतिं त्यजेत् ॥ ३७.

अणिमा महिमा मूर्तेर्गरिमा लघिमा तथा ।
प्राप्तिः प्राकाम्यमीशत्वमिन्द्रियश्रुतशक्तिभिः ॥ ३८.

गुणासङ्गो वशित्वञ्चेत्येवमष्टविभूतयः ।
प्रसिद्धास्ताउपेक्ष्यैव स्वस्वरूपं विचिन्तयेत् ॥ ३९.

अनूर्मिमत्वं देहेस्मिन्दूरश्रवणदर्शनं ।
मनोजवः कामरूपं परकायप्रवेशनम् ॥ ४०.

स्वच्छन्दमृत्युर्देवानां सहक्रीडानुदर्शनं ।
सङ्कल्पितार्थसंसिद्धिराज्ञाप्रतिहतागतिः ॥ ४१.

त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता ।
अग्न्यर्काम्बुविषादीनां प्रतिष्टंभो पराजयः ॥ ४२.

एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः ।
सगुणेशप्रसादेन सर्वाः प्राप्नोति मानवः ॥ ४३.

निर्गुणे मय्यखण्डात्मन्यात्मानं धारयन्मुनिः ।
निष्कामपरमानन्दं मामेवाप्नोत्यसंशयं ॥ ४४.

॥ हनूमान् ॥

ईशप्रसादलब्धानां सिद्धीनां पापतुल्यता ।
कथं त्वयोक्ता श्रीराम वद मे करुणानिधे ॥ ४५.

॥ श्रीरामः ॥

विज्ञानप्रतिबन्धत्वसामान्यात्सिद्धयोऽखिलाः ।
ईशप्रसादलब्धाअप्यत्र हेया मुमुक्षुणा ॥ ४६.

पापानीव च पुण्यानि विधूयन्ते बुधैः खलु ।
सकामपुण्यकार्यत्वं सिद्धीनामपि विश्रुतम् ॥ ४७.

ब्रह्मलोकतृणीकारलक्षणं जायते यदि ।
वैराग्यं तस्य सिद्धीच्छा नैव जायेत काचन ॥ ४८.

स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् ।
वैराग्यकारणं तस्य किमन्यदुपदिश्यते ॥ ४९.

रसवद्वायुवच्चास्य मनसश्चञ्चलत्वतः ।
वाञ्छा विविधभोगेषु जायते सिद्धिरूपिषु ॥ ५०.

साधनानि बहून्याहुश्चित्तैकाग्र्याय केचन ।
तैलधारामिवाच्छिन्नं मन्नाम्नां कीर्तनं परे ॥ ५१.

षडक्षरादिमन्त्राणां जपेनोपांशुनेत्यथ ।
अन्ये तु हठयोगेन प्राणसंरोधनात्मना ॥ ५२.

सत्कथाश्रवणेनान्ये सत्तर्केणेति चापरे ।
प्रतीकोपासनेनान्ये पूजास्तोत्रादिरूपिणा ॥ ५३.

एवमन्येपि यागाद्यैः चित्तैकाग्र्यं भवेदिति ।
कर्मिणः प्राहुरेतेषां गौणसाधनता यतः ॥ ५४.

अतश्चित्तस्य चाञ्चल्यनिवृत्त्यै मारुतात्मज ।
मुख्यसाधनता स्वात्मध्यानस्यैवोपपद्यते ॥ ९९.

स्वस्तिकासनमास्थाय समाहितमनास्तथा ।
अपानमूर्द्ध्वमुत्थाप्य प्रणवेन शनैश्शनैः ॥ ९६.

हस्ताभ्यां धारयेत्सम्यक्कर्णादिकरणानि च ।
अङ्गुष्ठाभ्यामपि श्रोत्रे तर्जनीभ्यां तु चक्षुषी ॥ ९७.

नासापुटावथान्याभ्यां प्रच्छाद्य करणानि वै ।
आनन्दाविर्भवो यावज्ज्योतिस्फूर्तिश्च मारुते ॥ ९८.

तावत्प्राणं ब्रह्मरन्ध्रस्थाने शिरासि धारयेत् ।
षण्मुखीकरणञ्चैतदतिगोप्यतरं त्वया ॥ ९९.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीयपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
अणिमादिसिद्धिदूषणं नाम
॥ षोडशोऽध्यायः ॥

---

॥ हनूमान् ॥

भगवन् वेदतत्वज्ञ त्वन्मुखाम्बुजानिस्सृतं ।
अष्टोत्तरशतार्थैकमधु पीतं मयाधिकम् ॥ १.

एतेन कृतकृत्यत्वं मम सिद्धं नसंशयः ।
तथापि किञ्चिच्छ्रोतव्यमस्ति वैदुष्यसिद्धये ॥ २.

दशोपनिषदि श्रीमन्बहुविद्याः प्रपञ्चिताः ।
अवश्यवेदितव्यास्ता इत्याहुर्विबुधोत्तमाः ॥ ३.

विद्यासन्ततिविज्ञानाभावे किञ्चिदज्ञता मम ।
भवेदिति च मन्येऽहं तस्मात्तास्त्वन्निबोध मे ॥ ४.

॥ श्रीरामः ॥

हनूमंच्छृणु वक्ष्यामि विद्यासन्ततिमद्भुतां ।
दशोपनिषादि प्रोक्तां विद्वद्भिः परमाद्दताम् ॥ ५.

छान्दोग्ये बृहदारण्येप्येताविद्याः प्रपञ्चिताः ।
तास्वेका सत्यविद्याख्या यस्यां स्वांशः प्रसीदति ॥ ६.

दक्षिणेक्षिणि सूर्ये च यउपास्य स्वयंप्रभः ।
सएवाखण्डरूपोस्मीत्येवं ध्यायेदहर्निशम् ॥ ७.

एवं यदि निराधारा सा सद्यो मुक्तिकारिणी ।
भवेत्साधारतायान्तु क्रममुक्त्यै नसंशयः ॥ ८.

अक्ष्यादित्यगतं वस्तु प्रकृतं सगुणं ननु ।
ज्योतिष्ट्वाद्विदुषस्सत्यादनावृत्तेश्च निर्गुणम् ॥ ९.

अन्या दहरविद्याख्या यस्यां ब्रह्मांशईरितः ।
हृत्पुण्डरीकमध्यस्थस्सर्वेषां प्राणिनामपि ॥ १०.

अन्वेष्टव्यं तदेकान्ते विजिज्ञास्यं चिदम्बरं ।
बाह्याम्बरवदापूर्णं भावयेत्सत्यचिद्घनम् ॥ ११.

साधारदर्शने साचेद्दुपास्तिस्सुसमापिता ।
पूर्ववत्क्रममुक्त्यै सा भवेत्खण्डात्मदर्शनात् ॥ १२.

वैश्वानरस्य विद्यान्या यस्यां प्रादेशमात्रकं ।
ब्रह्मांशं प्रत्यगात्मानं दृष्ट्वा पूर्णञ्च भावयेत् ॥ १३.

प्राणाग्निहोत्रिणस्सर्वेप्येनान्नित्यमुपासते ।
तथापि तद्यथार्थत्वं न विजानन्ति मारुते ॥ १४.

अत्राधारापवादश्चेन्नकृतोपि मुमुक्षुणा ।
क्रममुक्तिर्नसन्देहः पूर्णत्वाऽननुचिन्तनात् ॥ १५.

पञ्चाग्निविद्याप्यन्यासीद्यस्यां पञ्चाग्नयश्श्रुताः ।
द्युपर्जन्यक्षितिमयाः पुरुषस्त्रीमयावपि ॥ १६.

तानग्नीन्क्रमशो ध्यात्वा पश्चाद्ब्रह्मैव चिन्तयन् ।
मुक्तिं विन्देत नोचेत्साविरक्तिफलवान् भवेत् ॥ १७.

अन्या च षोडशकलविद्या प्रश्नश्श्रुतीरिता ।
यया च साक्षाद्ब्रह्मात्मा प्रसीदति विवेकिनाम् ॥ १८.

प्राणादयः कला यत्र कल्पिताष्षोडशेरिताः ।
अप्राणमक्षरं प्राप्य कलास्ता उत्सृजेद्बुधः ॥ १९.

प्राणाद्याधारमद्वैतं पूर्णञ्चेद्ब्रह्मभावयेत् ।
सद्योमुक्तिर्बुधस्यात्र नान्यथा कपिनायक ॥ २०.

अन्या चोद्गीथविद्यास्यादुद्गीथं प्रणवात्मकं ।
ध्यात्वा त्रिमात्रं शुद्धस्या*द्यस्यां मुक्तिः क्रमाद्भवेत् ॥ २१.

सद्योमुक्तिनिमित्तत्वं प्रोक्तं षोडशमात्रया ।
विभक्तप्रणवोपास्तेर्यतः पूर्वं मरुत्सुत ॥ २२.

अन्या शाण्डिल्यविद्यास्याद्यस्यामात्मा मनोमयः ।
प्राणदेहश्च भारूप उपास्यइति कथ्यते ॥ २३.

अत्र च प्रत्यगात्मत्वादुपास्यस्य दृढव्रत ।
क्रममुक्तिर्गुणापाये सद्योमुक्तिर्भवत्यपि ॥ २४.

---

* शुद्धस्य यस्यांमुक्तिः इति पाठान्तरम्.

अन्या पुरुषविद्यास्यात्पुरुषो यत्र कल्पितः ।
यज्ञत्वेनायुषो वृद्ध्यै सा विद्या काम्यरूपिणी ॥ २५.

द्युनिवेशनपूर्वाणां विभूतीनामिवात्र च ।
गुणानां हेयता युक्ता पुरुषो न तु हीयते ॥ २६.

अन्या पर्यङ्कविद्यास्यात्पर्यङ्कस्थं विधिंप्रति ।
प्रास्थितस्याध्वनि त्यागः पठ्यते पुण्यपापयोः ॥ २७.

त्रिलिङ्गकत्वात्प्राप्यस्य ब्रह्मलोके मुमुक्षुभिः ।
हेयोपादेयतातत्वशून्यता च क्रमाद्भवेत् ॥ २८.

अन्यात्वक्षरविद्यास्याद्यत्रास्थौल्यादिलक्षणं ।
अक्षरं निर्गुणं ब्रह्म प्रोच्यते ब्राह्मणोत्तमैः ॥ २९.

अविनाश्येककूटस्थचैतन्यविषया यतः ।
इयं ततः क्रमात्सद्यो वा भवेन्मुक्तये परा ॥ ३०.

अन्या संवर्गविद्यास्यादस्यां संवर्गसंज्ञितः ।
वायुः प्राणात्पृथक्सिद्धोह्यध्यात्म्यञ्चाधिदैवतम् ॥ ३१.

वायुसायुज्यसालोक्यवचनात्सगुणैव सा ।
कैवल्यमुक्त्यै निष्कामैर्विदिता चेत्क्रमाद्भवेत् ॥ ३२.

अन्या च मधुविद्यास्याद्यस्यां पृथ्व्यादिकं जगत् ।
उपास्यते मधुत्वेन सान्त्यलिङ्गात्तु निर्गुणा ॥ ३३.

अन्या च प्राणविद्यास्यात्प्राणो ज्यायान् समस्ततः ।
इति संप्रोच्यते सा हि सगुणा विकृतित्वतः ॥ ३४.

उपकोसलविद्यान्या यत्राचार्याग्नयस्त्रयः ।
शिष्यस्योपादिशन्नात्मविद्यां निर्गुणरूपिणीम् ॥ ३५.

सद्योमुक्तिकरी विद्या सा ज्ञेया विबुधैश्श्रुतं ।
यत्पापाश्लेषवचनं पद्मपत्रमिवाम्भसा ॥ ३६.

साद्विद्याऽन्या तु सद्ब्रह्म परोक्षज्ञानरूपिणी ।
छान्दोग्ये परमोदारा प्रवृत्ता श्वेतकेतवे ॥ ३७.

उपदिष्टे परात्मैक्ये तत्र तत्वमसीत्यपि ।
गुरूक्तेस्साधनानुक्तेः क्रममुक्त्यै च सा ध्रुवम् ॥ ३८.

अन्या तु भूमविद्या स्याद्यद्वाऽनन्यन्न पश्यति ।
सैवापरोक्षविज्ञानरूपा विद्येश्वरीमता ॥ ३९.

अनुक्तसाधनत्वेऽपि गुरुप्राधान्यहानितः ।
शिष्यानुभूतिरूपत्वात्सद्योमुक्त्यै च सा भवेत् ॥ ४०.

एवमन्याश्च काश्चित्स्युर्विद्या वेदान्तबोधिताः ।
एतास्तूद्देशतः प्रोक्ता वेदितव्या मनीषिभिः ॥ ४१.

विद्यासन्ततिविज्ञानं शिष्यचित्तपरीक्षणं ।
अवश्यभावि सर्वेषामाचार्याणां विशेषतः ॥ ४२.

अपरीक्षितशिष्याय स्वयञ्चानधिकारिणे ।
उपदिष्टा यथा विद्या गुरुणा विफला भवेत् ॥ ४३.

तथोपादिष्टा विद्यापि शिष्यायाप्यधिकारिणे ।
विद्यासन्ततिविज्ञानहीनेन गुरुणा कपे ॥ ४४.

यथा विद्या प्रदातव्या शिष्यपात्रं सुनिर्मलं ।
सर्वलक्षणसंपन्नं ज्ञात्वैवेति नियम्यते ॥ ४५.

तथा विद्या गृहीतव्या गुरुनाथं सुनिर्मलं ।
सर्वलक्षणसंपन्नं ज्ञात्वैवेति विनिश्चितु ॥ ४६.

सदाचार्योपदिष्टार्थश्शुक्लपक्षेन्दुवत्क्रमात् ।
शिष्यस्य वर्धते नित्यं पूर्णश्च विमलो भवेत् ॥ ४७.

असद्गुरूपदिष्टार्थः कृष्णपक्षेन्दुवत्क्रमात् ।
शिष्यस्य ह्रसते नित्यं नष्टश्च समलो भवेत् ॥ ४८.

कालान्तरसमुद्भूतं शिष्यदौष्ट्यं महत्तरं ।
ज्ञात्वाऽऽचार्यो यथा रोषाद्दूरतः परिवर्जयेत् ॥ ४९.

कालान्तरसमुद्भूतं गुरुदौष्ट्यं महत्तरं ।
ज्ञात्वा शिष्यस्तथा रोषाद्दूरतः परिवर्जयेत् ॥ ५०.

स्वामिभृत्यौ जगत्यस्मिन्पतिभार्ये च मारुते ।
पितृपुत्रौ च संबद्धावन्योन्यं शास्त्रवर्त्मना ॥ ५१.

तयोरेकस्य पातित्ये यथाऽन्ये नास्ति हेयता ।
एवं संबद्धयोः पूर्वमपि स्याद्गुरुशिष्ययोः ॥ ५२.

अधर्मं प्रतिपन्नस्य गुरोरप्यविवेकिनः ।
स्ववर्णाश्रमहीनस्य शासनं हि विधीयते ॥ ५३.

जात्यशिष्टोऽपि विबुधो गुरुर्भवितुमर्हति ।
कर्माशिष्टस्तु कुत्रापि न गुरुत्वमवाप्नुयात् ॥ ५४.

धर्मोद्देशेन लोकेस्मिन्गुरून् गृह्णन्ति केचन ।
अर्थोद्देशेन केचिच्च कामोद्देशेन केचन ॥ ५५.

तेषां तत्तत्फलासिद्धौ गुरुशुश्रूषणादिकं ।
यथा वृथा तथा मोक्षोद्देशेनाराधनं गुरोः ॥ ५६.

तस्माद्विधर्मानाचार्यान् पूर्वकांस्त्वं परित्यज ।
गौणाचार्यानपि श्वश्रूस्तत्याज जनको मम ॥ ५७.

वैधर्म्यं मय्यभूत्किञ्चिद्विद्यते वाऽञ्जनासुत ।
भविष्यति यदि प्राज्ञ तदारभ्य तु मां त्यज ॥ ५८.

ज्ञानं सिध्यतु ते नोवा शुभाचारान्नतु त्यज ।
श्रेयोहानिः क्वचिन्नैव कस्याचिच्छुभकारिणः ॥ ५९.

श्रुत्युक्ताऽखिलविद्यानां निपुणोऽपि निरूपणे ।
स्वाचाररहितो मूर्ख इति निश्चिनु मारुते ॥ ६०.

स्वधर्मैराप्यते विद्या साक्षाद्वेदान्तवाक्यजा ।
प्रणम्य* वातस्त्वन्नित्यं स्वधर्मनिरतो भव ॥ ६१.

श्रुतिस्मृतिसमीरितानतिरहस्यधर्मास्फुटं
तव श्रुतवतोऽधुना किमपि नैव वेद्यान्तरं ।
तथापि मयि ते गुरौ श्रुतिशतेपि चाष्टोत्तरे
स्वधर्मचरणे तथा भवतु भक्तिरव्याजतः ॥ ६२.

समस्तजनमोहिनी सकललोकहेतुः परा
महाभवभयङ्करी विरतिबोधधिक्कारिणी ।
सुरेन्द्रविधिदुस्तरा यमभटाऽतिघोराखिल-
स्वधर्महातिकारिणी जयति सा हि माया मम ॥ ६३.

अतः प्रतिपदञ्च तत्तरणहेतुभूता मम
स्मृतिर्भवतु मारुते सकलभीतिविध्वंसिनी ।
ययैव सुरसत्तमा अपि भवाब्धिपारङ्गता
स्वबोधसुखनिर्भराः परमगुश्च तन्मे पदम् ॥ ६४.

श्रोतव्यं निखिलं श्रुतं ममभुखाद्भक्त्या त्वया मारुते
तत्सर्वं सफलङ्कुरुष्व मननाद्ध्यानाच्च तीव्रात्स्वयं ।

---

* प्रणाध्य इति पाठान्तरम्.

एषा मे गुरुदक्षिणा प्रियतमा तत्वार्थसंवर्धिनी
नोचेदूषरबीजवापिनइव क्लेशाय मे मद्वचः || ६५.

स्नेहातिरेकादमलात्मबोधे मयैव माशङ्कितमन्यथा त्वं |
सर्वार्थविद्वानधुना तु धीमन्मरुत्सुतासीति हि साधु मन्ये || ६६.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीयपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
विद्यासन्तति गुरुतत्वनिरूपणं नाम
|| सप्तदशोऽध्यायः ||

---

|| हनूमान् ||

भगवंस्त्वन्मुखाम्भोजाच्छ्रोतव्यमखिलं श्रुतं |
तथापि मे त्वदुक्तार्थशुश्रूषा जायते पुनः || १.

तस्मात्त्वमुक्तपूर्वार्थसंगतीस्संग्रहेण मे |
सकृत्स्मारय मन्नाथ धारणार्थं यथाक्रमम् || २.

|| श्रीरामः ||

वेदान्तेषु समस्तेषु तथा भागत्रयेपि च |
अष्टोत्तरशतस्यादौ प्रामाण्यं मुख्यमीरितम् || ३.

अथ सच्चित्सुखानन्तब्रह्मज्ञानोदयात्परं |
तादात्म्याभ्यासयोगश्च कर्तव्यइति निश्चितम् || ४.

ततः प्रारब्धवज्जीवन्मुक्तलक्षणमीरितं |
पश्चाद्विदेहमुक्तस्य निष्प्रारब्धस्य लक्षणम् || ५.

वासनाक्षयविज्ञानमनोनाशादिकं ततः ।
सप्तभूमीविचारश्च प्रक्तस्तदनन्तरम् ॥ ६.

अथ दृश्यानुविद्धादिषट्समाधिनिरूपणं ।
अथ वर्णाश्रमाचारव्यवस्थापनमद्भुतम् ॥ ७.

ततस्सञ्चितपूर्वाणां विभागः कर्मणामथ ।
कर्मि भक्त ज्ञानि योगि गुणत्रयनिरूपणम् ॥ ८.

त्वद्धैर्यनिमित्तात्मविश्वरूपप्रबोधनं ।
तारकप्रणवस्याथ मात्राभेदानिरूपणम् ॥ ९.

चतुर्वेदरहस्यार्थमहावाक्यार्थबोधनं ।
ततश्च मूलाधारादिनवचक्रविवेचनम् ॥ १०.

अणिमाद्यष्टसिद्धीनां दूषणञ्च ततःपरं ।
विद्यासन्ततिविज्ञानगुरुतत्वावबोधनम् ॥ ११.

एवं गीतामहाशास्त्रं मम ते कपिनायक ।
प्रोक्तं समस्तवेदान्तरहस्यार्थैकगार्भितम् ॥ १२.

तीर्थक्षेत्रोत्सवभ्रान्तिर्नृणां स्यादधमाधमा ।
मन्त्राणां विविधानाञ्च चिन्ता स्यादधमा कपे ॥ १३.

द्वात्रिंशद्दशवेदान्तचिन्तनं मध्यमं भवेत् ।
अष्टोत्तरशतप्रोक्ततत्वचिन्तनमुत्तमम् ॥ १४.

सर्ववेदान्तगूढार्थविशदीकरणक्षमे ।
अस्मिन्गीता महाशास्त्रे चिन्तनं तूत्तमोत्तमम् ॥ १५.

इयं गीता त्वया लब्धा गोपनीया प्रयत्नतः ।
अस्यां भक्तिविहीनस्य न किञ्चिद्वक्तुमर्हसि ॥ १६.

एवं श्रीरामवचनसुधाधारां भृशं पिबन् ।
हनूमान् बाष्पपूर्णाक्षः सगद्गदमुवाचह ॥ १७.

॥ हनूमान् ॥

श्रीराम मत्संसृतिजार्तिहारिन् श्रीजानकीनाथ सरोजनेत्र ।
श्रीमद्वसिष्ठादिमहर्षिसेव्य श्रीनाथ मन्नाथ किमद्य वक्ष्ये ॥ १८.

गीताऽमृतास्वादनमत्तचित्ते वक्तव्यमद्य प्रतिभाति नो मे ।
तथापि तेऽत्यद्भुततत्वनिष्ठा चिन्ताः प्रवृत्तौ त्वरयन्ति वाचम् ॥ १९.

गीता श्रुता बह्व्यइतःपुरस्ताच्छ्रीराम तत्वप्रतिपादयित्र्यः ।
अस्यास्तु सर्वाअपि कोटिकोटिभागेन तुल्या इह नेति मन्ये ॥ २०.

श्रीरामगीताऽमृतपानतृप्तः तृणीकृतेन्द्रो विजरो विमृत्युः ।
अहं विशोको विजिघत्सएष स्वस्थो पिपासोऽस्मि किमन्यदाप्यम् ॥ २१.

यद्भवं गन्धमात्रं वा न वासयासि मय्यतः ।
भगवान्निति संबोधं मन्ये सार्थमहं प्रभो ॥ २२.

जन्मान्तरसहस्रेषु निष्कामसुकृतानि मे ।
यानि तेषामिमां गीतां राम मन्ये महत्फलम् ॥ २३.

यथा भवत्पदाम्भोजरेणुं धृत्वाऽऽत्ममस्तके ।
दुस्तराम्भोनिधिस्तीर्णस्तथा च भववारिधिः ॥ २४.

पित्रा मर्कटजात्या च चपलत्वं सदा मम ।
तत्सर्वञ्च व्यपोह्याशु नैश्चल्यमकरोरहो ॥ २५.

किमत्र बहुनोक्तेन धन्यएवास्मि राघव ।
तथापि न भवेद्येन कृतज्ञत्वक्षतिर्मम ॥ २६.

सद्गुरो प्रार्थयाम्यद्य तदेवाजस्त्रचिन्तनं ।
चतुर्मुखसुरेन्द्रादिनतयोस्त्वत्पदाब्जयोः ॥ २७.

एवं हनूमता प्रोक्तः श्रीरामः करुणानिधिः ।
प्रोवाच सस्मितं वाक्यं स्निग्धं सूक्ष्मार्थगर्भितम् ॥ २८.

॥ श्रीरामः ॥

मे भक्ता अभवंस्तथैव बहवश्शिष्याश्च पूर्वं कपे
तेष्वेकोपि मया न दृष्टइह यल्लोके क्वचित्त्वादृशः ।
तद्वेदान्तरहस्यगर्भितमहागीतोपदेशार्हतां
मत्वा केवलमेव ते निगदिता गोप्या त्वया यत्नतः ॥ २९.

आत्मानं त्वरणिं विधाय सकलानीशादिमुक्त्यन्तिमा-
न्वेदान्तानपिचोत्तरारणिमयं जातस्तु गीताऽनलः ।
सत्तर्कोन्मथनात्त्वदार्तिसमिधं दग्ध्वा ज्वलंस्ते हृदि
त्वद्वाग्भूय समस्तसज्जनभवारण्यं दहत्वाश्रितम् ॥ ३०.

शिष्टाशिष्टसुरासुरैर्मथनतो वेदान्तदुग्धोदधौ
चिन्ता वासुकि बुद्धि मन्दरगिरेः दुश्शास्त्रहालाहलं ।
पीत्वा जातमहं त्रिनेत्रउमया युक्तोऽचिरात्सीतया
मद्गीतामृतमेतदस्मि भवते दत्वा सुरेभ्यस्सुखी ॥ ३१.

मद्गीतामृतमागलं पिबति यस्तस्यान्यशास्त्रैः फलं
किं वा देशिकदेवतान्तरनतिस्स्तोत्रादिभिः पूजनैः ।
किं दुग्धोदधिजामृतेन सुतरां पीतेन वा मारुते
देवानामुपचर्यते ह्यमरता नोपीत गीतस्य तु ॥ ३२

पीतगीतामृतस्त्वं तु चिरञ्जीवित्वमेष्यसि ।
नचासुरकृता पीडा भविष्यति तवानघ ॥ ३३.

हनूमन्नावयोरेतं सुसंवादसुधारसं ।
कर्णाभ्यामादरेणैव ये पिबन्ति नरोत्तमाः ॥ ३४.

येऽत्रत्याध्यायमेकं वा श्लोकं श्लोकार्धमेव वा ।
पठन्ति नित्यं नियमादहं तन्मोक्षलग्नकः ॥ ३५.

सर्वलक्षणयुक्तेन त्वया प्रीतो हि मद्गुरुः ।
एवं कदा त्वच्छिष्येण भविष्याम्यञ्जनासुत ॥ ३६.

इत्युक्त्वा भगवान् रामः शिष्यं तं पवनात्मजं ।
आलिलिङ्गे स्वयं वेगादश्रुपूर्णाक्षिपङ्कजः ॥ ३७.

इति तत्वसारायण उपासनाकाण्डस्य द्वितीयपादे सर्ववेदरहस्यार्थासु
श्रीरामगीतासूपनिषत्सु
सर्वाध्यायसङ्गतिनिरूपणं नाम
॥ अष्टादशोऽध्यायः ॥

॥ श्री रामगीता समाप्ता ॥

---

॥ श्री रामचन्द्रार्पणमस्तु ॥

॥ श्रीरामजयम् ॥

॥ श्री मेधादक्षिणामूर्तये नमः ॥

॥ उ पा हि त भा गः ॥

ईशावास्यादि मुक्तिकान्ताष्टोत्तरशतोपनिषत्सारांशगर्भिते - सद्योमुक्ति क्रममुक्ति जीवन्मुक्ति विदेहमुक्तिकारणीभूते - क्रममुक्तिप्रयोजक दशोपनिषदाश्रितब्रह्ममीमांसार्थप्रतिपादक दक्षिणामूर्तिवृत्तेः निखिलाध्येतृजनानामानन्दावाप्तये चतुरधिकशतग्रन्थनिर्मातृभिः श्रीमदप्पयदीक्षितैः प्रणीतया व्याख्यारूपया अधिकरणकञ्चुकाख्यसूत्रार्थवृत्यासमेत ज्ञानकाण्डेन - जीवन्मुक्तिप्रयोजक द्वात्रिंशोपनिषदर्थप्रतिपादक रामगीतासमेतोपासनाकाण्डेन - विदेहमुक्तिप्रयोजकाष्टोत्तरशतोपनिषदाऽश्रिताऽनुभूतिमीमांसावृत्यासमेत कर्मकाण्डेन च सहिते - स्थूलसूक्ष्मकारणतुरीयभेदेन द्वादशभेदवत्रिपाद्ब्रह्माभिव्यञ्जक द्वादशपादशोभिते - एकैकपादस्य पञ्चविंशत्यध्यायमण्डिते - स्वगतश्लोकसहस्रादौ गायत्र्या एकैकमक्षरमलङ्कुर्वच्चतुर्विंशतिसहस्रश्लोकोपेते - श्री दक्षिणामूर्तिब्रह्मसंवादात्मके - श्री वसिष्ठमहर्षिणा लोकानुग्रहार्थं तारकब्रह्मावतार श्री रामचन्द्रं निमित्तीकृत्योपदिष्टे - तत्वसारायणे प्रबलतरे - ब्रह्मविष्णुरुद्रादि सकलदेवताराध्ये - जन्मान्तरसहस्रार्जितानेकपुण्यराशिलभ्ये - धर्मादि चतुर्विधपुरुषार्थसिद्धिप्रदे - दर्शन स्पर्शन पूजन पठन श्रवणश्रावणादिकान्यतममात्रेण नित्यमङ्गळप्रापके - इतिहासरत्ने गुरुज्ञानवासिष्ठे - तदन्तर्भूत काण्डत्रयाणां विषयसूचिका तत्तत्काण्डसारसङ्ग्रहश्च ॥

## ॥ ज्ञानकाण्डस्थ विषयसूचिका ॥

॥ इति ज्ञानकाण्डस्थविषयसूचिका समाप्ता ॥

---

## ॥ उपासनाकाण्डस्थ विषयसूचिका ॥

॥ इत्युपासनाकाण्डस्थविषयसूचिका समाप्ता ॥

---

## ॥ कर्मकाण्डस्थ विषयसूचिका ॥

॥ इति कर्मकाण्डस्थ विषयसूचिका समाप्ता ॥

## ॥ ज्ञानकाण्डसारनिरूपणम् ॥

॥ ब्रह्मा ॥

स्वामिन् समस्तवेदान्तरहस्यार्थज्ञ सद्गुरो ।
काण्डत्रयार्थान्विज्ञाय कृतार्थोस्मि तवाननात् ॥ १.

तथापि विस्तरोक्तत्वान्मनो डोलायते मम ।
अतस्तान्सङ्ग्रहेणाद्य दयया वक्तुमर्हसि ॥ २.

इत्युक्तो दक्षिणामूर्तिस्सर्वज्ञो भक्तवत्सलः ।
प्रथमं वक्तुमारेभे ज्ञानकाण्डं सुसङ्ग्रहात् ॥ ३.

॥ श्री गुरुमूर्तिः ॥

यत्प्रसिद्धं परंब्रह्म सच्चिदानन्दलक्षणं ।
जन्मादिरहितं शुद्धं जीवजन्मादिकारणम् ॥ ४.

जगदीशपराचीनं निर्गुणं निष्कळं विभुं ।
तदेवास्तीति विज्ञेयं सर्वाधिष्ठानमद्वयम् ॥ ५.

अवस्थात्रयहीनत्वात्तस्यावस्था न कथ्यते ।
जीवत्रितयसाक्षित्वान्नजीवत्वं च कथ्यते ॥ ६.

देहत्रयविहीनत्वान्नदेहित्वं च कथ्यते ।
प्रज्ञानघनरूपत्वान्नाज्ञानित्वं च कथ्यते ॥ ७.

तदेव निर्मलं ब्रह्म जीवो भूत्वा निजांशतः ।
कर्ता भोक्तेति संसारे सदा मुह्यति शोचति ॥ ८.

ब्रह्मेतरत्समस्तञ्च मायाऽविद्याविजृम्भितं ।
आनित्यमेव जन्मादेर्जगज्जीवेश्वरादिकम् ॥ ९.

इति जन्मान्तरोद्भूतपुण्यैर्यस्य विजायते ।
नित्यानित्यविवेकश्च वैराग्यं च ततःपरम् ॥ १०.

शमादिषट्कसम्पत्तिर्मुमुक्षुत्वं च निर्मलं ।
तस्य दृष्टात्मनो देहे श्रवणं च विधीयते ॥ ११.

तत्वमस्यादिवाक्यार्थं श्रुणुयात्सद्गुरोर्मुखात् ।
तत्पदस्येश्वरो वाच्यो मायाशबळितः प्रभुः॥ १२.

लक्ष्यं तु निर्गुणं ब्रह्म सत्यज्ञानादिलक्षणं ।
त्वंपदस्य तु जीवोऽयं वाच्योऽविद्यावशङ्गतः ॥ १३.

लक्ष्यस्तु निर्गुणस्सूक्ष्मः कूटस्थः प्रत्यगाह्वयः ।
कूटस्थब्रह्मणोरैक्यं जीवेशत्यागपूर्वकम् ॥ १४.

आह लक्षणयैवान्यत्रितीयासि पदं परं ।
इति श्रवणमात्रेण स्वस्याज्ञानं निवर्तते ॥ १५.

मननोत्पन्नविज्ञानात्संशयश्च निवर्तते ।
ब्रह्मलोकक्रमेण स्यान्मुक्तिश्चावृत्तिवर्जिता ॥ १६.

देहेन्द्रियमनो बुद्धिशून्यसाक्षी निरामयः ।
प्रत्यगात्मा शिवोऽस्मीति विदित्वा सुखमश्नुते ॥ १७.

ब्रह्मात्मैक्यत्वविज्ञानादेहाध्यासं यदा त्यजेत् ।
तदा स ब्रह्मवित्सूर्यद्वारा ब्रह्मणि मोदते ॥ १८.

आत्मानं सच्चिदानन्दं विदित्वैवाजरामरं ।
जरामरणसंसारसागरोत्तारणं भवेत् ॥ १९.

ज्ञानहीनः पशुःप्रोक्तो ज्ञानी पशुपतिस्स्वयं ।
ज्ञानं विना न मोक्षोऽस्ति जन्म संसारबन्धनात् ॥ २०.

पठन्तु वेदशास्त्राणि वेदान्तांश्च पठन्तु वा ।
ब्रह्मज्ञानोदयाभावे न प्रयोजनमण्वपि ॥ २१.

कुर्वंतु नानाकर्माणि सञ्चरन्तु तपांसि वा ।
ब्रह्मज्ञानोदयाभावे न प्रयोजनमण्वपि ॥ २२.

निषेवन्तां च तीर्थानि क्षेत्रेषु च वसन्तु वा ।
ब्रह्मज्ञानोदयाभावे न प्रयोजनमण्वपि ॥ २३.

यजन्तु देवतास्सर्वा नानामन्त्रान्जपन्तु वा ।
ब्रह्मज्ञानोदयाभावे न प्रयोजनमण्वपि ॥ २४.

कुर्वन्तु नानासिद्धीश्च भक्तीस्तीव्रतराश्च वा ।
ब्रह्मज्ञानोदयाभावे न प्रयोजनमण्वपि ॥ २५.

हठयोगांश्च कुर्वन्तु वादान्नानाविधांश्च वा ।
ब्रह्मज्ञानोदयाभावे न प्रयोजनमण्वपि ॥ २६.

ब्रह्मात्मैकत्वबोधन्तु वाक्यार्थश्रवणोद्भवः ।
आविद्यकामशेषाञ्च भ्रान्तिं नाशयति ध्रुवम् ॥ २७.

ऐहिकामुष्मिकभ्रान्तिर्ब्रह्मज्ञानोदयावधि ।
प्रोच्यते मनुजानां वा देवानां न ततःपरम् ॥ २८.

अहंब्रह्मेति विज्ञानात्त्यक्त्वाऽज्ञानं च संशयं ।
सञ्चिताशेषकर्मभ्यो विमुक्तो निर्मलो भवेत् ॥ २९.

नाहमन्नमयो देहो नाहं प्राणमयोपि च ।
नाहं मनोमयो नाहं विज्ञानमयएव च ॥ ३०.

सचानन्दमयो नाहं पञ्चमस्सुप्तिगोचरः ।
षष्ठस्तु पूर्णानन्दोऽहं परब्रह्मात्मको विभुः ॥ ३१.

इति विज्ञानवान्मर्त्यस्संसारे निवसन्नपि ।
अर्चिरादिपथा गच्छेद्देहान्ते ब्रह्मणःपदम् ॥ ३२.

पृथिव्यापश्च तेजश्च वायुराकाशएव च ।
शब्दस्पर्शश्च रूपं च रसो गन्धश्च नास्म्यहम् ॥ ३३.

कार्यकारणभूतेभ्यः परं सच्चित्सुखात्मकं ।
निष्कलं निष्क्रियं शान्तं ब्रह्मास्मीत्यवधारयेत् ॥ ३४.

शुक्तौ रजतवज्जीवे कूटस्थे च जडाजडौ ।
अध्यस्येते महामोहाद्देहजीवौ ततो मृषा ॥ ३५.

परिपूर्णे परानन्दे परेब्रह्मणि निर्द्वये ।
नाध्यासस्योपपत्तिर्हि प्रागुत्पत्तेरभेदतः ॥ ३६.

ब्रह्मणो जनिताऽनादिरविद्यामूलकारणं ।
आनन्दमयकोशाद्या विकारास्तत्समुद्भवाः ॥ ३७.

तेष्वात्मानं क्रमाज्जीवश्शोचत्यध्यस्य मोहतः ।
आत्मन्यपि च तानेवं हृदयग्रन्थिरेषच ॥ ३८.

अन्योन्याध्यासमेतं हि पुरस्कृत्य जनोऽखिलः ।
प्रवर्तते बहिर्नानाभोज्याहरणहेतवे ॥ ३९.

ब्रह्मविज्ञानमात्रेण सचाध्यासो निवर्तते ।
शुक्तिविज्ञानमात्रेण रजतं कल्पितं यथा ॥ ४०.

एवं सति सनिर्दुष्टः पूर्वदृष्टावभासनात् ।
अध्यास उपपद्येत सादित्वाच्च विनश्यति ॥ ४१.

प्रतिबिंबात्मवादश्च प्रकृताध्याससाधकः ।
उपाध्युत्पत्तिसापेक्षो जीवस्योपाधिमत्वतः ॥ ४२.

अतआरम्भवादस्स्यादादौ वा परिणामवाक् ।
विवर्तवादः पश्चात्तु स्वान्योन्याध्यासलक्षणः ॥ ४३.

श्रुतिसिद्धेषु वादेषु त्रिष्वेकस्य निरर्थतां ।
वक्तुं युक्तं ततस्तेषां पौर्वापर्यं निगद्यते ॥ ४४.

सर्वेषामपि वादानां यदधिष्ठानमुच्यते ।
तदेव निर्गुणं ब्रह्म ज्ञेयं भवमुमुक्षुणा ॥ ४५.

तदनन्यदिदं सर्वं जगच्च सचराचरम् ।
तदनन्यौ च जीवेशावित्येतद्ज्ञानमीर्यते ॥ ४६.

सर्वं ब्रह्मेति विज्ञाने प्रमाणजनिते सति ।
कर्मोपास्ति भ्रमः कस्य विजायेत कुतो विधे ॥ ४७.

काम्यकर्म हि भोगार्थं सगुणोपासनं तथा ।
शास्त्रोक्तं तत्र को मोहो विरक्तस्यात्मवेदिनः ॥ ४८.

आत्मनो दृष्टपूर्वस्याप्यखण्डत्वेन वेदनं ।
वाक्यार्थश्रवणेनैव जायते पद्मसंभव ॥ ४९.

ज्ञानञ्च द्विविधं प्रोक्तं स्वरूपं वृत्तिरित्यपि ।
तत्राद्यं द्विविधं प्रोक्तं सगुणं निर्गुणं तथा ॥ ५०.

सगुणं च द्विधा सिद्धं जीवईश्वरइत्यपि ।
निर्गुणं च द्विधा सिद्धं सरूपं च विरूपकम् ॥ ५१.

वृत्तिज्ञानं च तद्द्वेधा परोक्षञ्चापरोक्षकं ।
तत्राद्यं च विवेकोत्थं श्रवणोत्थमिति द्विधा ॥ ५२.

द्वितीयं मननोत्पन्नंनिदिध्यासनजं तथा ।
गौणमुख्यतया ज्ञेयं द्विविधं पङ्कजोद्भव ॥ ५३.
तत्र स्यात्क्रममुक्त्यर्थं परोक्षं ब्रह्मवेदनं ।
अपरोक्षात्मबोधं तु सद्योमुक्त्यर्थकं विदुः ॥ ५४.
सरूपं निर्गुणं यत्तु परंब्रह्म सनातनं ।
तदेव ज्ञेयमद्वैतं परोक्षाच्चापरोक्षतः ॥ ५५.
चराचरमिदं सर्वं जगत्तत्कारणेपि च ।
मायेश्वरौ मृषैव स्युः परमार्थनिरूपणे ॥ ५६.
जाग्रत्स्वप्नसुषुप्त्यादि जगत्तत्कारणे तथा ।
अनाद्यविद्याजीवौ स्युरुपादाननिमित्ततः ॥ ५७.
सर्वाधिष्ठानमद्वैतं निष्कलं निरुपाधिकं ।
स्वाऽभिन्नशक्तिसंयुक्तं चन्द्रश्चान्द्रिकया यथा ॥ ५८.
पूर्ववद्धेतुता तस्याप्यूरीकार्या बुधोत्तमैः ।
अन्यथा व्यवहारस्य प्रत्यक्षस्यागतित्वतः ॥ ५९.
एवं ये ब्रह्म जानन्ति शास्त्राचार्योपदेशतः ।
तेषां निर्गुणकैवल्यं क्रमात्सिद्ध्यति पद्मज ॥ ६०.

इति तत्वसारायणे कर्मकाण्डस्य चतुर्थपादे
ज्ञानकाण्डसारनिरूपणं नाम
॥ एकविंशोऽध्यायः ॥

---

## ॥ उपासनाकाण्डसारनिरूपणम् ॥

---

॥ श्री गुरुमूर्तिः ॥

अथातस्संप्रवक्ष्यामि सद्योमुक्त्यर्थकं परं ।
ब्रह्मन्नुपासनाकाण्डसारांशं सादरं श्रुणु ॥ १.

अहंब्रह्मेति विज्ञानमुत्पन्नं मननाद्यदा ।
तदनन्तरमेकान्ते निदिध्यासनमाचरेत् ॥ २.

उपासनं तत्परमं निदिध्यासनसंज्ञितं ।
ब्रह्मात्मैक्यानुसन्धानलक्षणं प्रोच्यते बुधैः ॥ ३.

अहंब्रह्मास्म्यहंब्रह्मास्म्यहंब्रह्मेति सन्ततं ।
अभिध्यानं प्रकुर्वाणस्साक्षाद्ब्रह्मत्वमाप्नुयात् ॥ ४.

शब्दानुविद्धसंज्ञोऽयं समाधिस्सविकल्पकः ।
विपर्ययमशेषं च सान्निवर्तयति ध्रुवम् ॥ ५.

यावानभ्यासवेगस्स्याज्ज्योतिस्फूर्तिश्च तावती ।
यावती ज्योतिषस्स्फूर्तिस्तावत्यावरणक्षतिः ॥ ६.

निश्शेषावरणक्षत्यां परञ्ज्योतिषि संस्थिते ।
स्वानन्दः परिपूर्णस्यात्सर्वदुःखक्षयात्ततः ॥ ७.

उपास्य वस्तुतादात्म्याज्जीवन्मुक्तिपदं गतः ।
उपासकः कृतार्थस्यात्साञ्चितागामिवर्जनात् ॥ ८.

यथा लिङ्गादिभिर्ज्ञानं श्रुत्यादिषु विधीयते ।
तथोपासनमप्येतन्नात्रकार्या विचारणा ॥ ९.

ज्ञानपूर्वकयोगोऽयं सप्तमाङ्गात्मको मतः ।
उपास्ति योगयोर्भेदं नहि पश्यन्ति पण्डिताः ॥ १०.

मायाविकारजन्मादिकारणं ब्रह्म निर्गुणं ।
उपास्यमाह वै शान्तउपासीतेति हि श्रुतिः ॥ ११.

सर्वालम्बं निरालम्बं प्रणवालम्बमद्वयं ।
परंब्रह्माहमस्मीति य उपास्ते स मुच्यते ॥ १२.

ब्रह्मणो जीवभावोऽभून्निष्कळस्य यथा पुरा ।
सकलस्यानयोपास्त्या जीवस्य ब्रह्मता भवेत् ॥ १३.

गायत्र्यादिमहामन्त्रैरिदमेव महत्तमम् ।
उपासनं परात्मैक्यध्यानरूपं निगद्यते ॥ १४.

उपास्याभिन्नता येनोपासकस्य प्रसिद्ध्यति ।
उपासनं तदेतद्धि स्वानुभूत्येककारणम् ॥ १५.

ब्रह्मविज्ञानवानेव प्रकृतोपासने विधे ।
अधिकारी मतो नान्यइति वेदान्तनिर्णयः ॥ १६.

स्वप्रकाशोऽस्मि पूर्णोऽस्मि निश्चलोऽस्मि निरामयः ।
प्रज्ञानघनरूपोऽस्मि जन्मादिरहितोऽस्म्यहम् ॥ १७.

आदिमध्यान्तहीनोऽस्मि निर्गुणोऽस्मि निरञ्जनः ।
अवस्थात्रयहीनोऽस्मि चिदानन्दरसोऽस्म्यहम् ॥ १८.

इत्येवमादिभिश्शब्दैर्भावयन्ब्रह्म निष्कळं ।
तादात्म्यं लभते सद्यो नात्र सन्देहकारणम् ॥ १९.

भावनासमयेप्येतत्पूर्ववासनया मनः ।
सञ्चरेद्बहिरालोच्य धीमान्भूयोऽपि भावयेत् ॥ २०.

धृत्वा युक्त्या विरक्त्या च ब्रह्मोपास्तिं समाचरन् ।
नाभ्यासश्रममाप्नोति क्षिप्रानन्दानुभूतितः ॥ २१.

जीवे विलीयमाने हि ब्रह्मण्यभ्यासयोगतः ।
जीवस्याधारभूता स्युः प्राणाक्षोभमुपागताः ॥ २२.

तथा विलीयमानेषु प्राणेषु च तदाश्रयाः ।
नाड्यश्च तासु नाडीषु तथा देहस्तदाश्रयः ॥ २३.

उत्थापिते यथा स्तंभे सङ्क्षुब्धाभवति क्षितिः ।
एवमभ्यासयोगेन देहादीनां श्रमो भवेत् ॥ २४.

मन्दाधिकारिणः प्रोक्तस्सच स्यान्मध्यमस्य वा ।
न तूत्तमस्य धृत्यादिसाधनैस्संयुतत्वतः ॥ २५.

मध्याह्वार्कप्रकाशञ्चेद्भावयेत्परमात्मनः ।
आकाशवद्विभुत्वं च तथा भवति साधकः ॥ २६.

यादृशीभावना यस्य सिद्धिर्भवति तादृशी ।
श्रुतिस्मृतिपुराणेषु प्रोच्यतेऽर्थोयमादरात् ॥ २७.

ब्रह्मात्मैकत्वविज्ञानान्मनोनाशो न जायते ।
अस्मात्तूपासनात्सिद्ध्येत्सप्राणस्येन्द्रियस्य सः ॥ २८.

शृण्वन्तु शतशो वाक्यं तत्वमस्यादिकं महत् ।
मन्यन्तां वा तथा तीव्रं विनोपास्त्या न मोचनम् ॥ २९.

निष्प्रपञ्चपरब्रह्मवृत्तिसन्ततिरात्मनः ।
अखण्डानन्दरूपत्वं स्वयमुत्पादयेद्ध्रुवम् ॥ ३०.

अभानावृतिनाशश्च ब्रह्मोपासनयाऽनया ।
संसिद्ध्यति स्वयञ्ज्योतिः प्रवाहोत्पत्तिसंभवात् ॥ ३१.

मनसा विषयीकर्तुमवाङ्मनसगोचरम् ।
कथं स्यान्निर्गुणं ब्रह्मेत्येवं शङ्कैव मास्तु ते ॥ ३२.

निर्गुणाद्धि पराचीनमत्यन्तागोचरं मतं ।
अरूपं ब्रह्म तन्नेह प्रोच्यते विफलत्वतः ॥ ३३.

मोक्षातीतस्वरूपोक्त्या मुमुक्षोः किं प्रयोजनं ।
सच्चिदानन्दमद्वैतं मोक्षरूपं तु कथ्यते ॥ ३४.

संशुद्धमनसैतत्तु निर्गुणं ब्रह्म चिन्त्यते ।
अनेन चिन्तनेनाशु हृद्ग्रन्थिर्भिद्यते तराम् ॥ ३५.

अनादिरूढसंसाररोगस्य महतःपरम् ।
ब्रह्मचिन्तनमेवेदं भवेत्सिद्धरसायनम् ॥ ३६.

अद्वैतसिद्धिश्रवणान्मननाद्याहृतेर्न च ।
भवेत्कस्यापि साक्षात्तद्ब्रह्म सञ्चिन्तनाद्विना ॥ ३७.

श्रुतिस्मृतिशतैः प्रोक्तं ब्रह्मध्यानमनुत्तमं ।
उपेक्ष्य वादमात्रेण ब्रह्मसाक्षात्कथं भवेत् ॥ ३८.

अहो मौढ्यं मनुष्याणां श्रुत्यन्तेषु स्थितेष्वपि ।
उपास्त्येकप्रधानेषु जना बोधैकवादिनः ॥ ३९.

उपासनमिदं नानाविक्षेपावृतिनाशनं ।
अनेनैव मनो नाशो जीवन्मुक्तिश्च नेतरैः ॥ ४०.

इति विज्ञानवन्तोऽपि जनाः केचन मोहिताः ।
ज्ञानोदयात्परं कार्यं नेत्याहुः किञ्चिदप्यहो ॥ ४१.

शेषशेषिविचारे च ज्ञानं शेष उपासनं ।
शेषीति निश्चयस्सिद्धः पण्डितानां चतुर्मुख ॥ ४२.

ज्ञानस्योपास्ति शेषत्वं यद्यनङ्गीकृतं तदा ।
तस्येन्द्रियाण्यवश्यानि विहरेयुर्निरङ्कुशम् ॥ ४३.

स्वेच्छाविहारात्पापानि प्रवर्धेरन्बहून्यपि ।
बहुपापनिदानेन तेन ज्ञानेन किं विधे ॥ ४४.

उपास्ति विधिशेषञ्चेद्ज्ञानमङ्गीकरिष्यति ।
संज्ञान्युपास्ति हीनोपि न स्वेच्छं विहरेत्क्वचित् ॥ ४५.

ज्ञानञ्च श्रवणोत्पन्नं मतं सप्रतिबन्धकं ।
प्रतिबन्धनिवृत्तिस्तु ब्रह्मोपासनयाऽनया ॥ ४६.

निवृत्ते प्रतिबन्धेऽस्मान्निदिध्यासनसंज्ञितात् ।
उपासनात्स्यात्सद्वज्ञानं श्रवणादिति केचन ॥ ४७.

एवं वेदान्ततात्पर्यं तेषामभ्युपगच्छतां ।
बुद्धिमान्द्यं किमत्राहं वक्ष्ये पङ्कजसंभव ॥ ४८.

श्रुतौ हि श्रवणं कार्यं दर्शनात्परमुच्यते ।
मननं च तथा कार्यं श्रवणात्परमुच्यते ॥ ४९.

निदिध्यासनमन्त्यन्तु मननात्परमुत्तमं ।
एवं सति कथं वाच्यं श्रवणं वाऽन्त्यसाधनम् ॥ ५०.

विपर्ययस्य शेषश्चेत्पूर्वजन्मनि संस्थितः ।
निदिध्यासनशेषेण निवर्त्य इह सद्ध्रुवम् ॥ ५१.

अज्ञानस्य च शेषश्चेत्पूर्वजन्मनि संस्थितः ।
इह श्रवणशेषेण तन्निरस्य ततःपरम् ॥ ५२.

कर्तव्यं मननं पूर्णं निदिध्यासनमप्यथ ।
साक्षात्कारस्य रूपस्य तेन निष्प्रतिबन्धकः ॥ ५३.

क्रममुक्त्यर्थकं ज्ञानं श्रवणादुपजायते ।
जीवन्मुक्त्यर्थकं सम्यग्ज्ञानन्तूपासनादिति ॥ ५४.

ये विजानन्ति शास्त्रोक्तवर्त्मना पण्डितोत्तमाः ।
तेवै जीवद्विमुक्तास्युर्नेतरे लोकवञ्चकाः ॥ ५५.

अरूपब्रह्म यत्प्रोक्तमवाङ्मनसगोचरं ।
वाक्यगोचरतां तस्य वदन्तः खलु वञ्चकाः ॥ ५६.

तस्य निर्गुणतामुक्त्वा ज्ञेयत्वं च मुमुक्षुभिः ।
सगुणत्व मुपास्यत्वं चिद्रूपस्य वदन्ति च ॥ ५७.

तेषां हतधियामेवमरूपज्ञानवादिनां ।
यथेच्छाचारयोगेन नरके पतनं ध्रुवं ॥ ५८.

ब्रह्मैक्योपासनादेव जीवन्मुक्तस्य योगिनः ।
प्रारब्धदेहसंपाते तदरूपन्तु सेत्स्याति ॥ ५९.

तस्माद्विज्ञानविषयं चिद्रूपं ब्रह्म निर्गुणं ।
उपासीत तदस्मीति जीवन्मुक्त्यै बुधोत्तमः ॥ ६०.

यद्विज्ञेयं पुरा ब्रह्म तदथोपास्यमुच्यते ।
अनुपास्यं तु यत्प्रोक्तं तदविज्ञेयमेव च ॥ ६१.

आदावुपासनं पश्चात्कर्तव्यं श्रवणं गुरोः ।
इति ब्रुवन् पदोष्णीषं शिरसा पादुकामपि ॥ ६२.

बिभृयान्नात्र सन्देहस्सहि मूढजनाग्रणीः ।
स्वप्नेपि श्रुतवान्नैव वेदस्याप्येकमक्षरम् ॥ ६३.

यस्त्वादौ श्रवणं पश्चान्मननञ्च ततःपरं ।
निदिध्यासनमित्याह क्रमसाधनवाद्ययम् ॥ ६४.

जीवन्मुक्तिपदं प्राप्य सर्वदुःखविवर्जितः ।
पूज्यते ब्रह्म विष्ण्वीशैरपि सत्यं मयोच्यते ॥ ६५.

इति तत्वसारायणे कर्मकाण्डस्य चतुर्थपादे
उपासनाकाण्डसारनिरूपणं नाम
॥ द्वाविंशोऽध्यायः ॥

---

## ॥ कर्मकाण्डसारसङ्ग्रहः ॥

## ॥ कर्मकाण्डसारनिरूपणम् ॥

---

### ॥ श्री गुरुमूर्तिः ॥

अथातस्संप्रवक्ष्यामि कर्मकाण्डस्य सङ्ग्रहं ।
यस्य श्रवणमात्रेण कृतार्थः पुरुषो भवेत् ॥ १.

कर्म हि त्रिविधं प्रोक्तं नित्यं नैमित्तिकं तथा ।
काम्यञ्चेति श्रुतिस्मृत्योः कर्तव्यं पद्मसम्भव ॥ २.

तत्र काम्यं परित्याज्यं सर्वथा मोक्षकांक्षिभिः ।
नैमित्तिकं तु कर्तव्यं जीवन्मुक्तेन योगिना ॥ ३.

अपि लोकोपकाराय स्वोपकाराय नित्यकं ।
अग्निहोत्रादि नित्यं स्यात्कार्यं स्वाश्रमासिद्धये ॥ ४.

अत्याश्रमित्वासंसिध्या जीवन्मुक्तस्य यावता ।
विदेहमुक्तिर्नप्राप्ता तावन्नित्यं समाचरेत् ॥ ५.

नित्यानुष्ठानसापेक्षा वैदेहीमुक्तिरुत्तमा ।
यतस्ततः कर्मजन्या सा मुक्तिरवधार्यते ॥ ६.

अथवा निर्विकल्पादिसमाध्यभ्यासयोगतः ।
तस्या उत्पद्यमानत्वात्कर्मजन्यत्वमुच्यते ॥ ७.

जीवन्मुक्तेन यः कार्यस्समाधिस्साहि मानसं ।
कर्मैव परमं पूर्वप्रोक्तोपासनतो विधे ॥ ८.

मानसत्वाविशेषेण कर्मैवोपास्तिरप्यभूत् ।
तथाप्युपास्ति संज्ञा हि ध्यानस्योक्ता मनीषिभिः ॥ ९.

तथा वाच्या समाधेरप्युपास्त्याख्या च यद्यपि ।
कर्मसंज्ञा हि तत्रापि प्रोच्यते विबुधैर्विधे ॥ १०.

तस्मात्प्रसिद्धा ये शब्दा येषु तांस्तेषु संवदन् ।
अहं नैवापराधी स्यामत्र सम्यङ्निरूपणे ॥ ११.

येनकेनप्रकारेण समाधिं भवनाशनं ।
ध्यानञ्चोपेक्षमाणानां ज्ञानिनां किं फलं वद ॥ १२.

उपासकाश्च कर्माणि स्वाश्रमोक्तानि योगिनः ।
उपेक्ष्यन्तेह्यनालोच्य पातकोत्पत्तिमात्मनाम् ॥ १३.

बाह्यञ्च नित्यकर्माद्यं समाध्याख्यं तथान्तरं ।
अन्तिमञ्च विधीयेते वैदेह्यै मुक्तये श्रुतौ ॥ १४.

नित्यकर्मविहीनस्य नाश्रमित्वं कदाचन ।
नचाश्रमविहीनस्य मुक्तिवार्तापि युज्यते ॥ १५.

श्रवणे मनने ध्याने समाधौवाऽश्रमीजनः ।
चोद्येत नेतरः पापी सर्वाधिकृतिवर्जनात् ॥ १६.

सन्त्यज्य स्वाश्रमाचारं यत्रकुत्रापि ये जनाः ।
प्रवर्तन्ते स्वयं मोहात्तेहि पाषण्डिनो मताः ॥ १७.

जीवन्मुक्तिं गतस्यापि दृष्टदुःखोररीकृतेः ।
तन्निवृत्त्यवसानश्च स्वाश्रमोत्र विधीयते ॥ १८.

स्वाश्रमाचारमात्रेण तन्निवृत्तिर्नसंभवेत् ।
समाधिनैव सोऽयं तु समाधिर्नाश्रमाद्विना ॥ १९.

जीवन्मुक्तोऽपि पुरुषः स्वाश्रमाचारपूर्वकं ।
विदेहमुक्तिसिध्यर्थं समाधिं नित्यमाचरेत् ॥ २०.

ब्रह्मचारी गृही वानप्रस्थस्सन्यास्यापि स्वयं ।
देहविस्मृतिपर्यन्तं स्वकर्मनिरतो भवेत् ॥ २१.

यानि निष्कामकर्माणि श्रुतिस्मृत्युदितानि च ।
तेषामत्राननुष्ठाने सर्वे स्युः प्रत्यवायिनः ॥ २२.

जीवन्मुक्तस्य वैदेह्यां मुक्ताविच्छाविवर्जने ।
पुनर्जन्माद्यभावेन न फलं कर्मणेति न ॥ २३.

तस्यापि कर्मत्यागे हि स्वेच्छाचारो भवेत्तदा ।
महापातकयुक्तस्यात्सच पाषण्डिनां वरः ॥ २४.

अथवा वस्तुतो जीवन्मुक्तिस्थानं गतः पुमान् ।
स्वभावाद्दृष्टदुःखेभ्यो भवेध्युपरतस्ततः ॥ २५.

स्वेच्छाचारादिसंयोगो न शङ्क्यश्च कथञ्चन ।
न ह्याश्रमयुतो नित्यं समाधिं श्रद्धया चरेत् ॥ २६.

अज्ञानाद्बन्धनं ज्ञानान्मुक्तिरित्युचितं मतं ।
कर्मणैवोभयञ्चेति ह्ययुक्तमिति चेच्छृणु ॥ २७.

बन्धस्य कारणं कर्म सकामं परिकीर्त्यते ।
मोक्षस्य कारणं कर्म निष्कामं तन्न दूष्यते ॥ २८.

उपासनाद्भिपूर्वोक्ताद्ब्रह्मवित्वमुपागतः ।
तद्वरत्ववरीयस्त्ववरिष्ठत्वाप्तये क्रमात् ॥ २९.

समाधिं निर्विकल्पं च निस्सङ्कल्पं ततःपरं ।
निर्वृत्तिकं च कुर्वीत दृष्टवैराग्यपूर्वकम् ॥ ३०.

यएवं सप्तमीं भूमिमधिष्ठाय वरिष्ठतां ।
संप्राप्तस्सोऽचिरादेव निर्वासनपदं व्रजेत् ॥ ३१.

यत्सर्ववचसां दूरं यस्सर्वमनसामपि ।
सर्वद्वन्द्वविनिर्मुक्तं तन्निर्वासनमुच्यते ॥ ३२.

यन्न ध्येयं न च ज्ञेयं न तर्क्यं श्राव्यमेव न ।
न वाच्यं न च लक्ष्यं च तन्निर्वासनमुच्यते ॥ ३३

यन्न ज्ञानं नचाज्ञानं नोपास्तिर्न विपर्ययः ।
न समाधिर्न विक्षेपस्तन्निर्वासनमुच्यते ॥ ३४.

ज्ञातृज्ञानज्ञेयभेदो नध्यात्रादिभिदापि न ।
न कर्त्रादिभिदाप्यस्ति तन्निर्वासनमुच्यते ॥ ३५.

ब्रह्मेति नाममात्रंयद्रूपं सदसत्परं ।
सत्तासामान्यमात्रं च तन्निर्वासनमुच्यते ॥ ३६.

अखण्डैकरसातीतं सप्तभूमिविवर्जितं ।
पराख्यमात्रातीतं च तन्निर्वासनमुच्यते ॥ ३७.

काण्डैस्त्रिभिः क्रमेणैव ज्ञानोपासनकर्मणां ।
यत्प्रापणीयं संप्रोक्तं तन्निर्वासनमुच्यते ॥ ३८.

यदेव सर्ववेदान्तमुख्यलक्ष्यार्थतां गतं ।
सर्वशक्तिविनिर्मुक्तं तन्निर्वासनमुच्यते ॥ ३९.

सत्यत्वेन प्रतीत्या वा ऽव्यवहारेण वा जगत् ।
जीव ईशश्च न ब्रह्म तन्निर्वासनमुच्यते ॥ ४०.

यत्र मायाप्यविद्या च तत्कार्याणि च सर्वधा ।
न सन्ति वेदशास्त्राणि तन्निर्वासनमुच्यते ॥ ४१.

यन्निरूपयितुं शक्यं न प्रमाणैः कथञ्चन ।
तद्ब्रहूक्त्या तव श्रोतुः किं फलं पद्मसंभव ॥ ४२.

समाधिगोचरं यत्तु सत्यज्ञानसुखात्मकं ।
मोक्षप्रयोजनं नित्यं तद्ब्रह्मैवावधारय ॥ ४३.

अखण्डैकरसाकारे परब्रह्मणि निश्चले ।
समाहितमनस्कस्य सिद्धामुक्तिर्निरङ्कुशा ॥ ४४.

समाधिना विदेहस्य स्वानन्दानुभवस्थिरः ।
स्वानन्दानुभवादन्यदणुमात्रं न विद्यते ॥ ४५.

स्वानन्दानुभवादेव शान्तिमेत्यपरां मुनिः ।
वरिष्ठस्सर्वदा शेते स्थिरोऽजगरवद्भुवि ॥ ४६.

बालोन्मत्तपिशाचादिचर्यामपि परित्यजन् ।
विदेहमुक्तिमासाद्य प्रेतवन्निश्चलस्सदा ॥ ४७.

भोगं विनैव प्रारब्धं कर्मापि क्षयमागतं ।
यस्य विस्मृतदेहस्य स लोके दुर्लभो महान् ॥ ४८.

कर्मणा जायते कर्म कर्मणा कर्म नश्यति ।
कर्मणा कर्मतामेत्य नैष्कर्म्यं सुखमश्नुते ॥ ४९.

हेयानि कानिचित्कर्माण्युपादेयानि कानिचित् ।
अहेयान्यनुपादेयान्यपि कानिचिदेव च ॥ ५०.

अकर्मबीजं कर्मस्यात्कर्मबीजमकर्म च ।
अतस्तदुभयं नित्यमाश्रयेद्बुद्धिमान्नरः ॥ ५१.

परब्रह्मणि चिन्मात्रे निर्विकल्पे निरञ्जने ।
समाधिभिर्यदा जीवः कर्ता नश्यति सर्वथा ॥ ५२.

तदा कर्ताऽखिलं पुण्यपापाख्यं यद्यदास्थितं ।
तत्तत्प्रणाशमभ्येति नात्रकार्या विचारणा ॥ ५३.

कर्ममूलानि साङ्ख्यानि कर्ममूलाश्च भक्तयः ।
कर्ममूलाश्च योगास्युः कर्ममूलमुपासनम् ॥ ५४.

कर्ममूलाश्च देहास्स्युः कर्ममूला च संसृतिः ।
कर्ममूलानीन्द्रियाणि कर्ममूलं मनोपि च ॥ ५५.

कर्ममूला अपि प्राणाः कर्ममूलैव चावृतिः ।
कर्ममूलं तदज्ञानं कर्ममूलं जडाजडम् ॥ ५६.

कर्ममूलाश्च तिर्यञ्चः कर्ममूला नरा अपि ।
कर्ममूलास्सुरास्सर्वे कर्ममूलो बृहस्पतिः ॥ ५७.

कर्ममूलश्चतुर्वक्त्रः कर्ममूलश्श्रियःपतिः ।
कर्ममूलो गिरीशश्च प्रकृतिः कर्ममूलिका ॥ ५८.

कर्ममूलं जगत्सर्वमिति निश्चित्य यो नरः ।
कर्माण्याश्रित्य कर्माणि सन्त्यजेत्सविमुच्यते ॥ ५९.

कर्मैव परमं श्रेयः कर्मैव परमं पदं ।
कर्मैव परमो लाभः कर्मैव परमामृतम् ॥ ६०.

कुर्वन्नेवेह कर्माणि यो जीवति शतं समाः ।
अनवद्यैकनिष्ठत्वात्तैर्लोपोऽस्ति न कश्चन ॥ ६१.

कर्मणा संसृतौ बद्धं कर्मोत्तारयितुं क्षमं ।
गर्ते निपतितं मत्तं द्विपेन्द्रं द्विपराडिव ॥ ६२.

आब्रह्मकर्मणा बद्धो मुच्यते ब्रह्मकर्मणा ।
ब्रह्मकर्मसमाधिस्स्यान्निर्विकल्पादिसंज्ञितः ॥ ६३.

असमाहितचित्तस्य दुःखं विक्षेपसंभवं ।
अनुस्यूततयैव स्यादविच्छिन्नप्रवाहवत् ॥ ६४.

संसारदुःखपूर्णस्य समाधिविमुखस्य च ।
किं वेदान्तपरिज्ञानैः फलमस्ति चतुर्मुख ॥ ६५.

अज्ञानावृतिविक्षेपान्दुःखबीजानि सन्त्यजन् ।
समाधिनात्ममात्रो यस्सकर्मी दुर्लभो भुवि ॥ ६६.

नित्यं कर्माग्निहोत्रादिसमाधीश्च तथान्तरः ।
यैश्श्रद्धयाऽनुष्ठीयेते तेषां हानिर्न काचन ॥ ६७.

बहुनोक्तेन किं ब्रह्मन् जीवन्मुक्तिपदं गतः ।
आदेहपातान्नित्यं च समाधिङ्कर्म सञ्चरेत् ॥ ६८.

विदेहमुक्तिकामश्चेदष्टोत्तरशतश्श्रुतीः ।
समाश्रित्य च कुर्वीत समाधिं सर्वदा बुधः ॥ ६९.

ज्ञानोपासनकाण्डाभ्यां जीवन्मुक्तो नरोत्तमः ।
एनं विदेहमोक्षाय कर्मकाण्डं समभ्यसेत् ॥ ७०.

इति तत्वसारायणे कर्मकाण्डस्य चतुर्थपादे
कर्मकाण्डसारनिरूपणं नाम
॥ त्रयोविंशोऽध्यायः ॥

---

# BHÂRATÎ SERIES

TRANSLATED AND PUBLISHED BY

## G. KRISHNA S'A'STRI'

*of the Adyar Library,*

ADYAR, MADRAS.

---

**Devi Bhagavata**, first four cantos and the first ten chapters of the fifth canto. Sanskrit text and Malayalam translation in Malayalam characters 1472 pp. *incomplete, price nine rupees.*

**Bhagavat Gita**. Sans. text and Mal. trans. 395 pp. in Mal. characters, Two rupees, four annas.

**Yagnavalkya Smriti**—A'chârakânda and a portion of Vyavahârakânda Sans. text and Mal. trans. 180 pp. incomplete in Mal. characters. One Rupee, two annas.

**Parasara Smriti**—Saucha prakaranam. Sans. text and Mal. trans. 40 pp. Four annas.

**Guru Sishya Samvadam**, Advaita prakaranam—Mal. Prose 40 pp. Four annas.

**Tattva bhoda prakaranam**—Advaita. Sans. text and Mal. trans. 16 pp. Two annas.

**Atma Vichara prakarnam**—Advaita, Mal. prose 28 pp. Three annas.

**Yogabhyasakrama**, Hatha Yoga, Sans. text and Mal. trans. 51 pp. Six annas.

**Ascharya darpana**, a complete hand book of Hindu religion and philosophy, Mal. Prose 410 pp. Two rupees, four annas.

**Jivanmukti prakaranam**, a free translation, Mal. prose, 165 pp. One rupee.

**Advaitabhodadipika**, a Manual of Advaita philosophy—Mal. prose 175. pp. One rupee, two annas.

**Bhashyahridaya** Do. Do. 201 pp. One rupee, four annas.

**Prasnopanishad** Text and Sans. Com. by Sankarâcharya in Mal. characters 32 pp. Three annas.

**Bharati manana**, Advaita, Sans. text and Mal. tran. 32 pp. Three annas

## Bha'rati' Series—(*Continued*).

**Stotra kalapa** Sans. verses in Mal. characters, select philosophic Hymns 32 pp. Three annas.

**Bhakta Vijaya,** complete lives of Jayadeva, Kapir and Kamal, and four chapters from the life of Jnaneswara, Mal. prose 400 pp. Two rupees, eight annas.

**Purana Sarasangraha,** being the esoteric interpretations of some important puranic stories, Mal. prose 132 pp. Fourteen annas.

**Pramana prakarana,** Mal. prose 15 pp. Two annas.

**Jivachintamani** or the Vaidika Sânkhya catechism, Mal. prose 23 pp. Three annas.

**Dravida Sutra** a brief exposition of Vedânta philosophy in popular language without technicalities, Mal. prose, 20 pp. Two annas.

**Yogadarpana** or a brief exposition of the Vaidika-Yoga Mârga followed by the Anubhavâdvaitins in preference to the Raja Yoga. Sans. text and Mal. trans. in Mal. characters 40 pp. Four annas.

**Prasnopanishad** with meanings, word for word, Anubhavâdgita Vedânta, text with Mal. meanings 68 pp. Six annas.

**Muktikamadhenu,** containing the Yoga, Jnâna, Bhakti, and Karma pâdas, 100 verses Sans. text alone in Mal. characters 20 pp. Two annas.

**Vedanta Vyavaharamala** containing Varnâs'rama, Svîkâra, Kâlakshepa, Adhikâra, Hatharâjâdi, Brahmarandhra Karmâdisamuchchaya, and Krayas'esha Vyavahâras, eight out of thirty-two decisions Sans. text and Mal. trans. 243 pp. One rupee, eight annas.

**Vedanta Yuddhaprakarana** the first four fights. Sans. text and Mal. trans. 50 pp. Five annas.

**Muktiratna,** being a complete exposition of the Anubhavâdvaita Vedânta, seven prakaranas complete, eighth incomplete, 136 pp. Fourteen annas.

**Gurujnana Vasistha** the contents and the first 13 chapters of the First kânda, Mal. prose trans. 108 pp. Ten annas.

Apply to:

**Messrs. V. Sundaraiyer & Sons,**

*Book-sellers,*

*Trichur, Via Sharanore, M. R.*

Printed by Thompson and Co., at the "Minerva Press," Broadway, Madras.